क्रुङ्चेत्यत्र चोः कुरझलीति कुत्वं प्राप्नोतिः 'सङी'ति वचनान्न भवति ॥ एतदपि नास्ति प्रयोजनं, निपातनादेतत्सिद्धम् ॥ किं निपातनम् ? ॥ 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चा'मिति ॥

धुर्य इत्यत्र 'हलि चे'ति दीर्घत्वं प्राप्नोति 'सङी'ति वचनान्न भवति ॥ एतदपि नास्ति प्रयोजनं 'न भकुर्छुरा'मिति प्रतिषेधो भविष्यति ॥

## संयोगान्तस्य लोपः ॥८।२।२३॥

॥*॥ संयोगान्तस्य लोपे यणः प्रतिषेधः ॥*॥ संयोगान्तस्य लोपे यणः प्रतिषेधो वक्तव्यः। दध्यत्र मध्वत्रेति ॥*॥ संयोगादिलोपे च [काक्यर्थं वास्यर्थम्] ॥*॥ संयोगादिलोपे च यणः प्रतिषेधो वक्तव्यः ॥ किमर्थम्[3] ? ॥ 'काक्यर्थं वास्यर्थम्' । ॥*॥ न वा झलो लोपात् ॥*॥ न वा वक्तव्यम् ॥ किं कारणम् ? ॥ 'झलो लोपात्' ॥ झलो लोपः संयोगान्तलोपो वक्तव्यः ॥*॥ बहिरङ्गलक्षणत्वाद्वा ॥*॥

प्र.] त्वाल्लोपाप्रसङ्गः । कुतो यः काष्ठशकीत्यनेन सति समासे निमित्तनिमित्तिनोः समानपदस्थत्वे लोपप्रसङ्गो न तु वाक्य इति दर्शयति । पदस्येत्यधिकारात्प्रत्यासत्तिन्यायाश्रयाच्चैकपदस्थयोर्निमित्तनिमित्तिनोर्ग्रहणम् । एवञ्च पयो धावतीत्यत्र सलोपाऽभावः । [ परेश्च घाङ्कयोः ]

संयोगान्तस्य लोपः । काक्यर्थमिति । 'तस्य दोषः संयोगादिलोपलत्वणत्वेष्वि'ति वचनात्स्थानिवद्भावादपि लोपः परिहर्तुं शक्यः । न वेति । झलो झली-

उ.] चान्येभ्योऽपि दृश्यत' इति भ्रष्ठभ्रूणेति सूत्रभाष्यस्थपाठमभिप्रेत्यै वेदं। नन्वसमासेऽपि लोपप्राप्तेः समासप्रदर्शमनुपयोगीत्यत आह–कुतो य इति । प्रत्यासत्तीति । अन्तरङ्गत्वादिति भावः । अनेनैव न्यायेनाऽन्यत्रापि परिहार इत्याह–एवञ्चेति । 'पयो धावन'मिति समासवारणार्थमुक्तमेव समाधानं मुख्यं । 'काष्ठशवस्थाते'त्यतिरिक्तानां झलि परे संयोगादिलोपप्राप्तियोग्यानामनभिधानमिति भाष्याशयमन्ये । भाष्ये–क्रुञ्चेति । नन्वत्रानुस्वारस्य परसवर्णे तस्याऽसिद्धत्वान्नकाराभावेन कस्य कुत्वमिति चेन्न, औपदेशिकनोपधत्वात् । अतएव क्रुञ्च्यादित्यादौ ञश्रवणं, नोपधत्वे हि नलोपः स्यादिति भावः । न च ञकारोच्चारणसामर्थ्यादेव कुत्वाऽभावे निपातनपर्यन्तं धावनं व्यर्थं, क्रुङ्ङित्यादावपि कुत्वानापत्तेः । निपातनेन तु चयोगे कुत्वाऽभावबोधनान्न दोष इति दिक् । परेतु अनेकज्ञापकनिपातानाश्रयणापेक्षया 'सङी'त्येव लघु इति सङीतिकार्यमेव । प्रत्याख्यानंत्वेकदेशिन इत्याहुः ।

संयोगान्तस्य । तस्य दोष इति । एवं च तदनाश्रयेणेदमिति भावः । ननु

१ 'इत्येतदनु' पा० । २ 'संयोगान्तलोपे' पा० । ३ इदं सर्वत्र लुप्तम् । ४ 'चेद' पा० ।

'अचि विभाषे'ति लत्वं प्राप्नोति–'सर्ङ्गी'ति वचनान्न भवति॥ नैतदस्ति प्रयोजनम्। उक्तमेतत्–'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्सिद्ध'मिति।।

पयो धावतीत्यत्र 'धि चे'ति सलोपः प्राप्नोति–'सर्ङ्गीति' वचनान्न भवति ॥ एतदपि नास्ति प्रयोजनं वक्ष्यत्येतत्–'धिसकारे सिचो लोप'इति ॥

द्विष्टरामित्यत्र 'ह्रस्वादङ्गा'दिति सलोपः प्राप्नोति 'सर्ङ्गी'ति वचनान्न भवति ॥ एतदपि नास्ति प्रयोजनम्—अत्रापि सिच इत्येवाऽनुवर्तिष्यते ॥

दृपत्स्थानमित्यत्र 'झलो झली'ति सलोपः प्राप्नोति 'सर्ङ्गी'ति वचनान्न भवति ॥ एतदपि नास्ति प्रयोजनम्—अत्रापि 'सिच' इत्येवानुवर्तिष्यते ।।

काष्ठशक्स्थातेत्यत्र 'स्कोः संयोगाद्योरन्ते चे'ति ककारलोपः प्राप्नोति 'सर्ङ्गी'ति वचनान्न भवति ॥

एतदपि नास्ति प्रयोजनं—काष्ठशगेव नास्ति कुतो यः काष्ठशकि तिष्ठेत?॥

---

प्र.] तक्षकाधीत्येव भवितव्य'मिति । तस्मादिदं वक्तव्यम्–एकपदाश्रयत्वादन्तरङ्गे रुत्वे कर्तव्ये पदद्वयनिबन्धनत्वाद्बहिरङ्गस्य सलोपस्याऽसिद्धत्वात्पूर्वत्रेति निर्दिष्टविषयाऽभावाद्रुत्वमेवाऽसिद्धत्वाऽभावात्प्रवर्तते । अल्विधित्वाच्च स्थानिवत्त्वाऽभावाद्रोर्लोपाऽभावः । द्विष्टरामिति । द्वौ वारौ द्विः । सुच्प्रत्ययः । परिपूर्णत्वाद्वारद्वयस्य प्रकर्षप्रत्ययः। तदन्तातिकमेत्तिङव्ययेत्याम्प्रत्ययः। दृपत्स्थानमिति । 'उदः स्थास्तम्भोः पूर्वस्ये'ति पूर्वसवर्णविधानात्सिचोऽन्यस्य सकारस्य 'झलो झली'ति लोपो न भवतीति ज्ञापकमाहुः। अन्यथा सलोपेनैवोत्थानमित्यादेः सिद्धत्वात्पूर्वसवर्णविधानमनर्थकं स्यात्। काष्ठशगेवेति । दृशिग्रहणात्प्रयोगानुसरणाच्चकारान्तेभ्यो धातुभ्यः क्विबभावात्। पक्स्थातेत्यत्र तु पचेः कुत्वस्याऽसिद्ध-

---

उ.]मृजेर्वृद्धिरित्यत्र।'धिसकारे सिचोलोप'इत्यस्य पूर्वपक्षस्थत्वादिदं समाधानमुपलक्षणमित्याह-इदं विरुध्यत इति। भाष्ये तु वार्तिकरीत्या वार्तिकप्रत्याख्यानं। भाष्यमते तत्समाधिमाह–अल्विधित्वादिति। वस्तुतस्त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषायाः कार्यकालपक्षेऽप्यप्रवृत्तेः 'खरवसानयो'रिति सूत्रभाष्ये वक्ष्यमाणतयेदमपि चिन्त्यम्। सिचोऽन्यस्येति। 'धिचे'तिवर्ज्यं[1] सामान्यापेक्षं ज्ञापकं। तेन 'द्विष्टरा'मित्यादौ 'ह्रस्वादङ्गा'दिति सलोपो न। भाष्ये त्वनुवृत्तिफललाभात्सिच इत्येवानुवर्तिष्यते इत्युक्तं। ज्ञापकनुपपादयति–अन्यथेति। वस्तुत इदं ज्ञापकं 'झलो झली'ति प्रकरणस्थसलोपस्तिङ्प्रत्यय एवेति वर्णनीयं। तेन 'पयो धावति' 'द्विष्टरा'मित्यत्रापि न दोष इति ध्येयम्। ननु लक्षणसद्भावात्कुतस्तदभावोऽत आह–दृशिग्रहणादिति। 'क्विप्चे'त्यत्र पूर्वसूत्राद्दृशिग्रहणमनुवर्तत इति भावः। 'क्विप्

---

१ 'इचो लोपः' पा० । २ 'उत्थातेत्यादेः' पा० । ३ 'वर्ज्यं' पा० ।

क्रुञ्चेत्यत्र चोः कुर्झलीति कुत्वं प्राप्नोतिः 'सङी'ति वचनान्न भवति ॥
एतदपि नास्ति प्रयोजनं, निपातमादेतत्सिद्धम् ॥ किं निपातनम् ? ॥
'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चा'मिति ॥

धुर्य इत्यत्र 'हलि चे'ति दीर्घत्वं प्राप्नोति 'सङी'ति वचनान्न भवति॥
एतदपि नास्ति प्रयोजनं 'न भकुर्छुरा'मिति प्रतिषेधो भविष्यति ॥

## संयोगान्तस्य लोपः ॥८।२।२३॥

॥*॥ संयोगान्तस्य लोपे यणः प्रतिषेधः ॥*॥ संयोगान्तस्य लोपे यणः प्रतिषेधो वक्तव्यः। दध्यत्र मध्वत्रेति ॥*॥ संयोगादिलोपे च [काक्यर्थं वास्यर्थम्]॥*॥ संयोगादिलोपे च यणः प्रतिषेधो वक्तव्यः॥ किमर्थम्[3] ?॥ 'काक्यर्थं वास्यर्थम्' । ॥*॥ न वा झलो लोपात् ॥*॥ न वा वक्तव्यम् ॥ किं कारणम् ? ॥ 'झलो लोपात्' ॥ झलो लोपः संयोगान्तलोपो वक्तव्यः ॥*॥ वहिरङ्गलक्षणत्वाद्वा ॥*॥

प्र.] त्वाल्लोपाप्रसङ्गः । कुतो यः काष्ठशकीत्यनेन सति समासे निमित्तनिमित्तिनोः समानपदस्थत्वे लोपप्रसङ्गो न तु वाक्य इति दर्शयति । पदस्येत्यधिकारात्प्रत्यासत्तिन्यायाश्रयाच्चैकपदस्थयोर्निमित्तनिमित्तिनोर्ग्रहणम् । एवञ्च पयो धावतीत्यत्र सलोपाऽभावः । [ परेश्च घाङ्कयोः ]

**संयोगान्तस्य लोपः** । काक्यर्थमिति । 'तस्य दोषः संयोगादिलोपलत्वणत्वेष्वि'ति वचनात्स्थानिवद्भावादपि लोपः परिहर्तुं शक्यः। न वेति । झलो झली-

उ.] चान्येभ्योऽपि दृश्यत' इति भ्रूणेति सूत्रभाष्यस्थपाठमभिप्रेत्यै वेदं। नन्वसमासेऽपि लोपप्राप्तेः समासप्रदर्शनमनुपयोगीत्यत आह–कुतो य इति । प्रत्यासत्तीति । अन्तरङ्गत्वादिति भावः। अनेनैव न्यायेनाऽन्यत्रापि परिहार इत्याह–एवञ्चेति । 'पयो धावन'मिति समासवारणार्थमुक्तमेव समाधानं मुख्यं। 'काष्ठशक्स्थाते'त्यतिरिक्तानां झलि परे संयोगादिलोपप्राप्तियोग्यानामनभिधानमिति भाष्याशयमन्ये। भाष्ये–क्रुञ्चेति । नन्वत्रानुस्वारस्य परसवर्णे तस्याऽसिद्धत्वाञ्ञकाराभावेन कस्य कुत्वमिति चेन्न, औपदेशिकञोपधत्वात् । अतएव क्रुञ्च्यादित्यादौ ञश्रवणं, नोपधत्वे हि नलोपः स्यादिति भावः । न च ञकारोच्चारणसामर्थ्यादेव कुत्वाऽभावे निपातनपर्यन्तं धावनं व्यर्थं, क्रुङ्भ्यादावपि कुत्वानापत्तेः । निपातनेन तु चयोगे कुत्वाऽभावबोधनान्न दोष इति दिक् । परेतु अनेकज्ञापकनिपातानाश्रयणापेक्षया 'सङी'त्यैव लघु इति सङीतिकार्यमेव। प्रत्याख्यानंत्वेकदेशिन इत्याहुः।

**संयोगान्तस्य** । तस्य दोष इति । एवं च तदनाश्रयेणेदमिति भावः । ननु

१ 'इत्येतदनु' पा० । २ 'संयोगान्तलोपे' पा० । ३ इदं सर्वत्र लुप्तम् । ४ 'चेद' पा० ।

अथ वा बहिरङ्गो यणादेशोऽन्तरङ्गो लोपः । 'असिद्धं बहिरङ्गमन्तरङ्गे' । ॥ * ॥ संयोगान्तलोपे सग्रहणम् ॥ * ॥ संयोगान्तलोपे सग्रहणं कर्तव्यम् । 'संयोगान्तलोपः सस्य चे'ति वक्तव्यम् । इहापि यथा स्यात्—श्रेयान् भूयान् ज्यायान् ।। किं पुनः कारणं न सिध्यति ? ॥ परत्वाद्रुः प्राप्नोति ॥ असिद्धो रुस्तस्याऽसिद्धत्वाल्लोपो भविष्यति ॥ न सिध्यति ॥ किं कारणं ? ॥ ॥*॥ रुविधानस्याऽनवकाशत्वात् ॥*॥ अनवकाशो[1] रुर्लोपं बाधेत ॥ सावकाशो रुः ॥ कोऽवकाशः ? ॥ पयः शिरः ॥ ननु चात्रापि जश्त्वं प्राप्नोति, स यथैव रुर्जश्त्वं बाधते एवं लोपमपि बाधेत ॥ न बाधते ।। किं कारणं ? ।। येन नाऽप्राप्ते तस्य बाधनं भवति न चाऽप्राप्ते जश्त्वे रुरारभ्यते, लोपे पुनः प्राप्ते चाप्राप्ते च ॥*॥ [ अथवा[2] ] योगविभागात्सिद्धम्[3] ॥*॥ अथवा योगविभागः करिष्यते । एवं वक्ष्यामि—'संयोगान्तस्य लोपोऽरात्' । संयोगान्तस्य लोपो भवत्यरात् ॥ ततः 'सस्य' । सस्य च लोपो भवति संयोगान्तस्य ॥ किमर्थंम्पुनरिदमुच्यते ? ॥ 'प्रतिषिद्धार्थं रुबाधनार्थं च' ॥

---

प्र.] त्यतः सिंहावलोकितन्यायेन झल्ग्रहणमिहाऽनुवर्तते । तत्षष्ठ्या विपरिणम्यत इति यणो लोपाऽभावः । 'स्कोः संयोगाद्यो'रित्यत्र तु पञ्चम्यन्तमेव संबध्यते, तेन झलः पूर्वयोः स्कोर्लोपविधानाद्यणः पूर्वयोर्लोपाऽभावः । अन्तरङ्ग इति । एकपदाश्रयत्वात् । स यथैवेति । यदा लक्षणनिरपेक्षं कार्याणां बाधकत्वमिति दर्शनं तदा विध्यन्तरैरनाक्रान्तो विषयो नास्तीत्यविशेषात्सर्वं कार्यं बाध्यमिति भावः । येन नाप्राप्त इति । यदा 'लक्षणं बाध्यत'इति दर्शनं तदा येन सर्वो-

---

उ.] झल्ग्रहणस्याऽप्रकृतत्वात्कथं झलो लोपोऽत आह–झलोझलीति। विपरिणम्यते इति। तच्च वाक्यभेदेन संबध्यते, तेनाऽझलोऽपि कस्यचिल्लोप इत्याहुः। तेन झलः पूर्वयोरिति । वस्तुतस्तु झल्ग्रहणस्य संयोगान्तलोपसूत्र एव संबन्धो न तु 'स्को'रित्यत्र, 'झलो लोपः संयोगान्तलोप'इति भाष्यस्वरसादित्याहुः। एकपदाश्रयत्वादिति । यद्यपि यण्विधौ न पदद्वयमुपात्तं तथापि एतल्लक्ष्ये पदद्वयाश्रयो यणिति भावः । अत्र 'बहिरङ्गलक्षणत्वा'दिति वार्तिकस्वारस्यात्, 'बहिरङ्गो यणादेश'इति भाष्याच्च यणादेशव्यतिरिक्तसंयोगान्तलोपप्राप्तिविषययणघटितप्रयोगाऽनभिधानं बोध्यम् । अन्यथाऽन्तरङ्गलक्षणत्वादन्तरङ्गो लोप इत्येव वदेत् । एवंच 'काव्य्''कलत्र्'इत्यादि चिन्त्यमेवेति दिक्। बाध्यसामान्यचिन्ताश्रयणे बीजमाह–यदेति । विशेषचिन्ताबीजमाह- यदेति । प्रतिषिद्धलोपं यत्तत्र प्रयोजनं

---

१ 'ग्र.ऽयं रु'पा०। २ अयं पाठो न प्रामाणिकेषु दृश्यते । ३ 'गाद्वा सिद्धमिति तु' गौडाः ।

अथ वा यदेतद्रात्सस्येति सग्रहणं तत्पुरस्तादपकक्ष्यते[1]—'संयोगान्तस्य लोपः'। ततः 'सस्य'। सस्य च संयोगान्तस्य लोपो भवति। ततः—'रात्।' रात्सस्यैव संयोगान्तस्य लोपो भवतीति[2]। अथ वा रात्सस्येत्यत्र 'संयोगान्तस्य लोप' इत्येतदनुवर्त्तिष्यते ॥ [ संयोगान्तस्य लोपः ]।

## धि च ८।२।२५

॥❀॥ धिसकारे[3] सिचो लोपः ॥❀॥ धिसकारे सिचो लोपो वक्तव्यः ॥ किं प्रयोजनम् ? ॥ ॥❀॥ चकाद्धीति[3] प्रयोजनम् ॥❀॥ इह मा भूत् सलोपः—'चकाद्धि पलितं शिर' इति ॥ यदि तर्हि सिचो लोप इत्युच्यते ॥❀॥ आशाध्वं तु कथन्ते[3] स्यात् ॥❀॥ ['आशाध्वं' तु कथम् ?] ॥ आशाध्वमित्यत्र लोपो न प्राप्नोति ॥❀॥ जश्त्वं[3] सस्य भविष्यति ॥❀॥ जश्त्वमत्र सकारस्य भविष्यति ॥❀॥ सर्वत्रैवं[3] प्रसिद्धं स्यात् ॥❀॥ सर्वत्रैव जश्त्वेन सिद्धं स्यात्। इहापि आयन्ध्वमारन्ध्वमिति, जश्त्वेनैव सिद्धम् ॥❀॥ श्रुतिश्चापि[3] न भिद्यते ॥❀॥ श्रुतिकृतश्चापि न कश्चिद्भेदो भवति ॥❀॥ लुङ्श्चापि[3] न मूर्द्धन्ये

प्र.] विषय आक्रान्तस्तदेव बाध्यते। न हि तदबाधित्वा रुत्वं विषयं लभते। यस्य तु क्वचित्प्राप्तिस्तदबाधेनाऽपि विषयलाभान्न तद्बाध्यते। अरादिति। रात्परस्य संयोगान्तस्य लोपो न भवति। ऊर्क्। अमार्ट्। प्रतिषिद्धार्थं चेति। 'अरा'-दिति प्रतिषेधस्य बाधनार्थम्। यथा—मातुः पितुरिति। 'श्रेया'नित्यादौ तु रुत्वबाधनार्थम्। नन्वानन्तर्यात्प्रतिषेधस्यैव बाधनार्थं सस्येत्येतत्स्यान्न तु रुत्वस्येत्याशङ्क्याह—अथवेति। अथ वा रात्सस्येत्यत्रेति। वाक्यभेदेन संबन्धः। 'रात्सस्यैव लोपो भवती'त्येकं वाक्यम्। 'संयोगान्तस्य लोप'इति द्वितीयम् ॥

धि च। धिसकार इति। स्थानिनो लोपं प्रति विषयत्वविवक्षया सकार इति सप्तमीनिर्देशः। चकाद्धीति। हे शिरः! पलितं सच्चकाद्धि शोभस्वेत्यर्थः। जश्त्वमिति। 'झलां जश्झशी'त्यनेन। श्रुतिश्चापीति। एकस्याऽनेकस्य वा व्यञ्जनपरस्य श्रुतौ विशेषो नावधार्यते। लुङ्श्चापीति। श्लोकवार्तिककारस्याऽ-

उ.] यस्येत्यर्थं इत्याह—अरादिति। [ संयोगान्तस्य लोपः ]॥

धिच। स्थानिन इति। धकारे परतो यः सकारविषयो लोपः स सिच एवेति भाष्यार्थ इति भावः। हे शिर इति। अनेनायुः प्रार्थ्यते। भाष्ये आयंध्वमरंध्वमिति सानुस्वारः पाठः। भाष्ये—जश्त्वेनैव सिद्धमिति। एवं च धि चेति सूत्रं न कार्यमिति भावः। ननु जश्त्वे दकारधकारौ, लोपे तु ध एवेति कथं श्रुतिभेदो न स्यादत आह—एकस्येति।

१ 'कृष्यते' पा०। २ इतिः क्वचिन्न। ३ श्लोकवार्त्तिकम्।

ग्रहणम् ॥॥ तत्रायमप्यर्थः—इणः षीध्वंलुङ्लिटां धोऽङ्गादित्यत्र लुङ्ग्रहणं न कर्तव्यं भवति ॥ इहापि अच्योढ्वमप्लोढ्वमिति षत्वे सिचो धस्य ष्टुत्वे च कृते जश्त्वेन सिद्धम् ॥॥ सेटि दुष्यतीति ॥॥ सेटि दोषो भवति । इदमेव रूपं स्यात्—अलविढ्वम्,—इदं न स्यात्—अलविध्वमिति । तस्मात्सिचो ग्रहणं कर्तव्यम् ॥ यदि तर्हि सिचो ग्रहणं क्रियते—॥ * ॥ घसिभस्योर्न सिध्येत्तु ॥ * ॥ घसिभस्योर्न सिध्यति–'सग्धिश्च मे सपीतिश्च मे', 'बब्धां ते हरी धाना' इत्यत्र न प्राप्नोति ॥॥ तस्मात्सिज्ग्रहणं न तत् ॥॥ तस्माद्धि चेत्यत्र सिचो ग्रहणं न कर्तव्यम् ॥ कथं 'चकाद्धि पलितं शिर' इति ? ॥ एवं तर्हि सिज्ग्रहणं कर्तव्यम् ॥ कथं सग्धिश्च मे सपीतिश्च मे बब्धां ते हरीधाना इति ? ॥ नैष दोषः[१] । इह तावत् सग्धिरिति, नैतद्घसेरूपं ॥ किं तर्हि ? ॥ सघेरेतद्रूपम् ॥ 'बब्धां ते हरीधाना' इति; नैतद्भसेरूपं ॥ किं तर्हि ? ॥ बन्धेरेतद्रूपम् ॥॥ छान्दसो वर्णलोपो

---

प्र.] युक्तमिदं वचनम् । अकृढ्वमभृढ्वमित्यादौ 'ह्रस्वादङ्गादिति' सिज्लोपे सति मूर्द्धन्यस्याऽविधाने रूपं न सिध्येत् । सग्धिरिति । अदेः क्तिनि 'बहुलं छन्दसी'ति घस्लादेशः । 'घसिभसोर्हलि चे'त्युपधालोपः, तत्र 'झलो झली'ति सलोपो न न प्राप्नोति इष्यते च । बब्धामिति । भसेर्लोटि तामि श्लौ द्विर्वचने पूर्ववदुपधालोपः । सघेरिति । सघ हिंसायामित्यस्य स्वरभेदोऽपि नास्ति, क्तिन्याद्युदात्तत्वात्तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरविधानाच्च । अनेकार्थत्वाच्च धातूनां समानादने सघिर्वर्तत इत्यर्थभेदोऽपि नास्ति । बन्धेरिति । 'बन्ध बन्धने'इत्यस्य भसेरर्थे वर्तमानस्य लोटि तामि व्यत्ययेन शपो लुकि नलोपे वर्णव्यत्ययेन धकारस्य बकारे बब्धामिति भवति । क्वचिद्बधेरिति पाठः, सत्वयुक्तः, बधेः सन्विषय-

---

उ.] अनेकस्येति । 'एकस्थानकानेकस्ये'त्यर्थः । व्यञ्जनपरस्येति । पञ्चमीतत्पुरुषबहुव्रीह्योरतन्त्रेण निर्देशः । अकृढ्वमिति । एतदर्थं मूर्द्धन्ये लुङ्ग्रहणस्यावश्यकत्वं, पूर्वपक्षत्वात्तु भगवता सूक्ष्मेक्षिका न कृतेति भावः ।' तादृशानामनभिधानमिति तदाशयं कश्चित् । भाष्ये 'अच्योढ्व'मिति च्युङ्प्लुङो रूपे । इदं न स्यादलविध्वमिति । 'विभाषेट' इत्यस्याऽप्राप्तेः, धिचेत्यस्याऽभावाच्च । तस्माल्लुङ्ग्रहणं धिचेति च कार्यमिति भावः । तत्पुरुषे इति । समाना ग्धिरिति समासेप्याद्युदात्तत्वमेवेत्यर्थः । ननु सघेर्हिंसार्थत्वात्समानादनरूपार्थाऽलाभोऽत आह–अनेकार्थत्वाच्चेति । सन्विषयत्वादिति । मान्बधेत्यनेन

---

१ इदं क्वचिन्न । २ श्लोकवार्त्तिकानि इमानि ।

वा यथेष्कर्त्तारमध्वरे' ॥ ❀ ॥ अथ वा छान्दसो वर्णलोपो भविष्यति । 'यथेष्कर्त्तारमध्वरे' । तद्यथा–'तुभ्येदमग्ने' ॥ तुभ्यमिदमग्न इति प्राप्ते । 'आम्वानां चरुः' । नाम्वानां चरुरिति प्राप्ते । 'आव्याधिनी रुगणाः' । आव्याधिनीः सुगणा इति प्राप्ते । 'इष्कर्तारमध्वरस्य' । निष्कर्तारमिति प्राप्ते । 'शिवा उद्रस्य भेषजीः' । शिवा रुद्रस्य भेषजीरिति प्राप्ते ॥ तस्मात्सिज्ग्रहणं कर्तव्यम् ॥

न कर्तव्यम् । यदेतद्रात्सस्येति सकारग्रहणं तत्सिचो ग्रहणं विज्ञास्यते ॥ कथम् ? ॥ 'रात्सस्ये'त्युच्यते न चाऽन्यो रेफात्परः सकारोऽस्त्यन्यदतः सिचः ॥

ननु चायमस्ति 'मातुः' 'पितु'रिति । तस्मात्सिचो ग्रहणं कर्तव्यम् ॥ न कर्तव्यम् ॥ कस्मान्न भवति 'चकाद्धि पलितं शिर'इति ? ॥

इष्टमेवैतत्सङ्गृहीतं, 'चकाधी'त्येव भवितव्यम् ॥

❀ ॥ घिसकारे सिचो लोपश्चकाद्धीति प्रयोजनम् ।

आशाध्वं तु कथं ते स्याज्जश्त्वं सस्य भविष्यति ॥ १ ॥
सर्वत्रैवं प्रसिद्धं स्याच्छ्रुतिश्चापि न भिद्यते ।
लुङश्चापि न मूर्द्धन्ये ग्रहणं सेटि दुष्यति ॥ २ ॥
घसिभस्योर्न सिध्येत्तु तस्मात्सिज्ग्रहणं न तत् ।
छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे ॥ ३ ॥ ❀ ॥

## दादेर्धातोर्घः । ८।२।३२ ।

इह दोग्धा दोग्धुमिति घत्वस्याऽसिद्धत्वाज्झत्वं प्राप्नोति ॥ नैष दोषः ।

---

प्र.] त्वादित्याहुः । छान्दस इति । घसिभस्योः सकारस्य लोपे वा रूपसिद्धिरित्यर्थः । 'इष्कर्तारमध्वरस्ये'त्येकदेशानुकरणादिष्कर्तारमध्वरशब्दात्सप्तमी । यदेतदिति । तदेव चोत्तरत्रानुवर्तत इति भावः । मातुरिति । उभयोः स्थाने भवत एकादेशस्यान्यतरतो व्यपदेशादुः स्थानिकत्वाद्रपरत्वे सति सकारस्य लोपः ।

दादेः । घत्वस्यासिद्धत्वादिति । 'पूर्वत्रासिद्ध'मित्यस्य प्रतियोगोपस्थाना-

---

उ.] नित्यं सन्निधानादिति भावः । अर्थान्तरे तत्र प्रयोगाऽभाव एवेति बोध्यम् । तत्र सिचो ग्रहणेऽपि प्रकृते किमायातमत आह–तदेव चेति । [ घि च ] ॥

---

१ अयं पाठः क्वचिन्न । २ 'यथा' पा० । ३ श्लोकवार्तिकानीमानि ।

उक्तमेतत्–'अपवादो वचनप्रामाण्या'दिति। अथ वैवं वक्ष्यामि–'ह्रोढो-ऽदादेः'। ह्रो ढो भवत्यदादेः। ततो 'धातोर्घः' इति। 'दादे'रित्यनुवर्तते 'ने'ति निवृत्तम्॥ [एवमपि 'घो] दादे'रित्युच्यते तत्रेदं न सिध्यति–अधोक्॥ क्व तर्हि स्यात्?॥ मा स्म धोक्॥ नैष दोषः। 'धातो'रिति नैषा दादिसमानाधिकरणा षष्ठी 'दादेर्धातो'रिति॥ का तर्हि?॥ अवयवयोगैषा षष्ठी–'धातोर्यो दादिरवयव' इति। सा चावश्यमवयवयोगा षष्ठी विज्ञेयोत्तरार्था॥ किं प्रयोजनम्?॥ 'एकाचो बशो भष्झषन्तस्य स्ध्वो'रिति, इहापि यथा स्याद्गर्दभयतेरप्रत्ययो गर्धबिति॥ यद्यवयवयोगा षष्ठी,–दोग्धा दोग्धुमित्यत्र न प्राप्नोति॥ एषोऽपि व्यपदेशिवद्भावेन धातोर्दादिरवयवो भवति॥

प्र.] देतत्सूत्रारम्भाच्च घत्वढत्वयोर्विकल्पप्रसङ्गः। उक्तमिति। न ह्युत्सर्गापवादयोर्विकल्पो युक्तः। द्रुहेश्च विकल्पविधिरनर्थकः स्यात्। अदादेरिति। असमर्थसमासो 'दादेर्न भवती'ति। 'धातोर्घ' इत्यत्र दादिग्रहणमनुवर्तते न तु नञ्। एषोऽपीति। प्रयोगभेदाद्भिन्नस्य धातोरयमवयव इति बुद्ध्या परिकल्पनात्।

उ.] दादेर्घा। विकल्पेति। एवं चाऽसिद्धवच्छास्त्रबाधो नेतिभावः। नहीति। श्रुत्या प्रकरणबाध एव युक्त इत्याशयः। न्यायसिद्धेऽर्थे लिङ्गमप्याह–द्रुहेश्चेति। असमर्थसमासे-नञो दादिग्रहणेन संबन्धाऽभावात्तस्य केवलस्योत्तरत्रानुवृत्तिरपि दुलभेत्याह–धातोर्घ इति। निषेधार्थकः 'अ'शब्दस्तु अप्रामाणिक इति तात्पर्यम्। न चाऽत्र न्यासे द्रुहेर्ढत्वाऽनापत्तिः। 'वा द्रुहे'त्यनेन विकल्पद्वारा ढानुवृत्त्या तस्यापि विधानादितिभावः। नन्वेवमप्युत्तरत्र दादिग्रहणानुवृत्तिर्व्यर्था, असिद्धत्वेन दादिभिन्नविषये ढत्वस्यैव प्रवृत्त्या व्यावर्त्याऽभावादिति चेन्न; 'दादे'रित्यस्य उपदेशवद्दादिलक्षकत्वात्। तेन दामलिट् पादलिडित्यादौ वक्ष्यमाणवैयधिकरण्यान्वयेऽपि न घत्वं। नच ढत्वमपि न स्याददादेरिति निषेधादिति वाच्यम्, अर्थाधिकारानुरोधेनोपदेशवद्दादेरेव तेन निषेधादिति भावः। उक्तमर्थमजानानः शङ्कते भाष्ये–एवमपीति। 'एकाच' इत्युत्तरसूत्रार्थं प्रसङ्गान्निर्णेतुम् 'अधो'गित्यस्य दादिपद-लक्षणाऽसाधारणफलत्वाऽभावं च दर्शयितुं तदुपेक्ष्य समाध्यन्तरमाह–भाष्ये–नैष दोष इति। सा चावश्यमिति। उत्तरार्थेति च। अनेनात्र सूत्रे तस्याऽनावश्यकता ध्वनिता। तद्बीजन्तु दादिपदलक्षणया निर्वाह इति। अन्यथा 'अधो'गित्यादौ घत्वप्रवृत्तिरूपप्रयोजना-न्तरसिद्धयेऽत्रैव सूत्रे वैयधिकरण्यान्वयस्यावश्यकत्वेनोत्तरार्थत्वेनावश्यकत्वप्रतिपादनस्य निर्बीजतापत्तिरिति दिक्। प्रयोगभेदादिति। यथा 'शिलापुत्रकस्य शरीरं' 'राहोः शिर' इत्यादौ। [ दादेर्धातोर्घः ]

१ 'पूर्वत्रासिद्ध'(८–२–१) मित्यत्रोक्तम्। २ अयं पाठः क्वचिन्न। ३'रिति वर्त्तते'पा०

॥ * ॥ हृग्रहो[र्भ]श्छन्दसि हस्य ॥ * ॥ हृग्रहोश्छन्दसि हस्य भत्वं वक्तव्यम्। गर्दभेन संभरति। मरुदस्य गृभ्णाति। सामिधेन्यो जभ्रिरे। उद्ग्राभश्च निग्राभश्च ब्रह्म देवा अवीवृधन्॥ [दादेर्धातोर्घः]।

## दधस्तथोश्च ।८।२।३८।

किमर्थश्चकारः ?॥ [॥*॥ चकारस्स्ध्वोरनुकर्षणार्थः ॥*॥] ॥ स्ध्वोरित्येतदनुकृष्यते॥ नैतदस्ति प्रयोजनं—सिद्धं स्ध्वोः पूर्वेणैव॥ न सिध्यति॥ किं कारणम् ?॥ अबशादित्वात्॥ ननु च जश्त्वे कृते बशादिः॥ असिद्धं जश्त्वं, तस्याऽसिद्धत्वान्न बशादिः॥ एवं तर्हि सिद्धकाण्डे पठितम'भ्यासजश्त्वचर्त्वमेत्त्वतुको'रिति॥ एत्त्वतुकोर्ग्रहणं न करिष्यते। 'अभ्यासजश्त्वचर्त्वं सिद्ध'मित्येव॥ एवमप्यझषन्तत्वान्न प्राप्नोति॥ लोपे कृते झषन्तः॥ स्थानिवद्भावान्न झषन्तः। अत उत्तरं पठति—॥*॥ दधस्तथोरनुकर्षणानर्थक्यं स्थानिवत्प्रतिषेधात्॥ * ॥ दधस्तथोरनुकर्षणमनर्थकम्॥ किं कारणम् ?॥ 'स्थानिवत्प्रतिषेधात्'। प्रतिषिध्यतेऽत्र स्थानिवद्भावः 'पूर्वत्रासिद्धे न स्थानिव'दिति॥ स चावश्यं प्रतिषेध आश्रयितव्यः॥ * ॥ इतरथा ह्यलोपे प्रतिषेधः॥*॥ यो हि मन्यतेऽनुकर्षणसामर्थ्यान्मेऽत्र[3] भवति, अलोपे तेन प्रतिषेधो वक्तव्यः स्यात्—दधाति[4] दधासि[5]॥ तथोश्चापि ग्रहणं शक्यमकर्तुम्॥ कथम् ?॥ 'झलि झषन्तस्ये'त्युच्यते तथोश्चाऽयं झलि झषन्तो भवति नान्यत्र॥

अथाप्येतन्नास्ति 'पूर्वत्रासिद्धे न स्थानिव'दिति, एवमपि नैवाऽर्थोऽनुकर्षणार्थेन चकारेण, नापि तथोर्ग्रहणेन। आनन्तर्यमिहाश्रीयते—'झलि झषन्तस्ये'ति। क्व चिच्च सन्निपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यं,

प्र.] दधस्त। एत्वतुकोर्ग्रहणमिति। फलिभजिग्रहणं सामान्येन सिद्धत्वस्य ज्ञापकमिति भावः। झलि झषन्तस्येति। झषन्तग्रहणाऽनुवृत्तौ सत्यां झषन्त-

उ.] दधस्तथोश्च। 'दध'इति कृतद्वित्वस्य धाञो ग्रहणं। फलिभजीति। यद्यभ्यासजश्त्वादेरसिद्धत्वं स्यात् फलिभजिग्रहणं न कुर्यात्, अनादेशादित्वात्पूर्वेणैव सिद्धेः। तत्कृतं तयोः सिद्धत्वं सर्वकार्यविषयं ज्ञापयति, नत्वेत्त्वविषयमेवेत्यर्थः। भाष्ये—तथोश्चापीति। चेन स्ध्वोश्चेत्यर्थः। 'झली'ति मण्डूकप्लुत्या संबध्यते, मसादिव्यावृत्त्यर्थं, झषन्तस्येत्यनुवृत्तिरपि दधेतीत्येतद्व्यावृत्त्यर्था। झषन्तत्वान्यथानुपपत्त्येति। सर्वत्र स्थानिवद्भा-

१ 'प्रभीता' पा०। २ इदं लुप्तमिति मन्ये। ३ 'भ्रात्र'। ४ 'ददाति'। ५ 'दधाति' पा०।

क चिन्नैव सन्निपातकृतं नापि शास्त्रकृतम् । लोपे सन्निपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यम् , अलोपे नैव सन्निपातकृतं नापि शास्त्रकृतम् । यत्र कुतश्चिदेवानन्तर्यं तदाश्रयिष्यामः ॥ [ दधस्तथोश्च ] ॥

## झषस्तथोर्धोऽधः ।८।२।४०।

'अध' इति किमर्थम् ? ॥ धत्तः । धत्थः ॥ ॥ ॐ ॥ 'अध' इति शक्यमवक्तुम्[1] ॥ ॐ ॥ कस्मान्न भवति–धत्तः धत्थ इति ? ॥

॥ॐ॥ जश्त्वे योगविभागः ॥ॐ॥ [ जश्त्वे[3] योगविभागः ] करिष्यते । इदमस्ति 'दधस्तथोश्चे'ति । ततो वक्ष्यामि–'झलां जशः[4]' । झलां जशो भवन्ति दधस्तथोः । ततः 'अन्ते' । अन्ते च झलां जशो भवन्तीति । तत्र जश्त्वे कृतेऽझषन्तत्वान्न भविष्यति ॥

॥ ॐ ॥ इति श्रीमद्भगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये अष्टमस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥ ॐ ॥

## रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।८।२।४२।

रदाभ्यामिति किमर्थम् ? ॥ चरितं मुदितम् ॥ ननु च 'रदाभ्या'मित्युच्यमानेऽप्यत्र प्राप्नोति । अत्रापि हि[5] रेफदकाराभ्यां परा निष्ठा ॥ न रेफ-

---

प्र.] त्वाऽन्यथानुपपत्त्या श्रुतिकृतमानन्तर्यमाश्रीयते । स्थानिवत्त्वकृतं तु व्यवधानं वचनादप्रतिबन्धकमित्यर्थः[6] । [ दधस्तथोश्च ] ।

झषस्त । तत्र जश्त्व इति । 'पूर्वत्राऽसिद्ध'मिति भष्भावे जश्त्वस्याऽसिद्धत्वात् झषन्तत्वं । धत्वे तु परस्मिन्सिद्धं जश्त्वमिति धत्वोऽभावः ॥

इति श्रीकैयटकृते महाभाष्यप्रदीपेऽष्टमस्य द्वितीये प्रथममाह्निकम् ॥

रदा । विचारस्य सद्भावादत्र प्रत्युदाहरणोपन्यासः । अत्र प्राप्नोतीति । निष्टेत्यसमस्तं लुप्तषष्ठीकं पदं, तेन रदाभ्यां परा या निष्ठा तस्यास्तकारस्य नत्व-

---

उ.] वादिति भावः। श्रुतिकृतमिति। तेन 'दधासी'त्यादौ न। एवं 'तथोश्चे'ति प्रत्याख्यातम् । झषस्त । यदि दधस्तथोर्जश्त्वं विधीयते तदाऽझषन्तत्वात् 'धत्त'इत्यादौ भष्भावो न स्यादत आह–पूर्वत्रेति। इतिभाष्यप्रदीपोद्योतेऽष्टमस्य द्वितीये प्रथममाह्निकम् । रदाभ्यां निष्ठा । भाष्ये प्रत्युदाहरणोपन्यासोऽनर्थक इत्यत आह–विचारस्येति । ननु समासे गुणभूतनिष्ठापदस्य विशेषणसंबन्धाऽयोगेना'ऽत्र प्राप्नोती'त्यसङ्गतमत आह–

---

१ 'मकर्त्तुम्' पा० । २ इदं भाष्यमित्यन्ये । ३ अयं पाठो लुप्तो भवेत् । ४ इदं क्वचिन्न । ५ हिः क्वचिन्न । ६ 'मिति भावः' पा० ।

दकाराभ्यां निष्ठा विशेष्यते ॥ किं तर्हि ? ॥ तकारो विशेष्यते—'रेफदकाराभ्यामुत्तरस्य तकारस्य नो भवति स चेन्निष्ठाया' इति ॥

अथ [ निष्ठादेशे ] पूर्वग्रहणं किमर्थम् ? ॥*॥ निष्ठादेशे पूर्वग्रहणं परस्यादेशप्रतिषेधार्थम् ॥*॥ निष्ठादेशे पूर्वग्रहणं क्रियते ॥ [ किं प्रयोजनं ? ॥ परस्यादेशप्रतिषेधार्थम्' ] । परस्यादेशो मा भूदिति । भिन्नवद्भ्याम् । भिन्नवद्भिः । छिन्नवद्भ्याम् । छिन्नवद्भिः ॥*॥ पञ्चमीनिर्दिष्टाद्धि परस्य ॥*॥ 'पञ्चमीनिर्दिष्टाद्धि परस्ये'ति परस्य प्राप्नोति ॥*॥ वृद्धिनिमित्तात्प्रतिषेधः ॥*॥ वृद्धिनिमित्तात्प्रतिषेधो वक्तव्यः ॥ किं प्रयोजनम् ?॥ ॥*॥ प्रयोजनं कार्तिक्षैतिफौल्लयः॥*॥ [प्रयोजनं कार्तिक्षैतिफौल्लयः]। कार्तिरिति वृद्धौ कृतायां 'रदा-

प्र.] मिति सूत्रार्थाश्रयणात् । न रेफेति । 'निष्ठात' इति समासनिर्देशः । तत्र निष्ठाया उपसर्जनत्वाद्विशेषणेनाऽसम्बन्धः । प्रधानस्य तु तकारस्य सम्बन्धः ।

अथेति । 'भिन्नवद्भ्या'मित्यादौ निष्ठादकारस्य बहिरङ्गत्वाल्लाक्षणिकत्वाच्च नत्वाऽभावात्पूर्वस्यैव भविष्यतीति प्रश्नः । निष्ठादेश इति । असति पूर्वग्रहणे पाठक्रमे निष्ठा प्रत्यासन्नेति तद्दकारस्यैव नत्वेन भाव्यं नाऽन्यस्येति बहिरङ्गलाक्षणिकत्वयोरहेतुत्वम् । किञ्च—पदस्येत्यधिकारात्पदावयवस्य दस्य नत्वविधानाद्बहिरङ्गत्वं नास्ति। केवलस्य च वर्णस्यानुपदेशाद्वर्णग्रहणेषु लक्षणप्रतिपदोक्तपरिभाषाया अव्यापारः । पञ्चमीनिर्दिष्टादिति। यद्यपि प्रत्यासत्तिर्नापेक्ष्यते तथापि रदाभ्यां परस्य दस्य नत्वेन भाव्यमिति सामर्थ्यान्निष्ठादकारस्यैव नत्वप्रसङ्गः ।

क्षैतिरिति । वृद्धिरेवाऽत्र नत्वस्य निमित्तं, 'क्षियो दीर्घा'दिति वचनात् ।

उ. ] निष्ठेतीति । ननु पूर्वग्रहणाऽभावे रदाभ्यां निष्ठातस्य नो दस्य च प्रत्यासत्त्या निष्ठाया एवेत्यर्थेन रदाभ्यां परस्य दस्य निष्ठासंबन्धिन एव संभवेन च भिन्नवद्भ्यामित्यादौ दोषोऽत आह—भिन्नवद्भ्यामित्यादाविति । अहेतुत्वमिति । वाक्यार्थबोधकालिकप्रत्यासत्तिन्यायेन तयोर्बाध इति भावः । वस्तुतस्तयोः प्रसक्तिरेव नास्तीत्याह—किंचेति । त्रिपाद्यां बहिरङ्गपरिभाषाऽभावाच्चेत्यपि बोध्यं । केवलस्यचेति । साक्षादुच्चारणेन बोधितं हि प्रतिपदोक्तम् , अनुमेयं च लाक्षणिकं, न च दकारादिस्तथा, समुदायघटकत्वेनैवोच्चारणेन तस्य सर्वथानुमेयत्वादिति भावः । इदमोत्सूत्रस्थभाष्यविरुद्धं । नापेक्ष्यते इति । लक्ष्यानुरोधादिति भावः । तत्पुरुषे क्षैतेः सङ्करं कार्त्तेरसङ्करं च दर्शयति—वृद्धिरेवेत्यादिना । बहुव्रीहिपक्षे क्षैतौ वृद्धिरेव ऐकारो ननु वृद्धिनि-

१ इदं क्वचिदपि न दृश्यते । २ इदं प्रायो लुप्तम् । ३ इदं क्वचिन्न ।

भ्या'मिति नत्वं प्राप्नोति । क्षैतिरिति वृद्धौ कृतायां 'क्षियो दीर्घा'दिति नत्वं प्राप्नोति । फौल्लिरिति वृद्धौ कृतायामुदुपधत्वसन्नियोगेन ल्त्वमुच्यमानं न प्राप्नोति ॥ अथोच्यमानेऽपि प्रतिषेधे 'वृद्धिनिमित्ता'दिति कथमिदं विज्ञायते,—वृद्धिरेव निमित्तं वृद्धिनिमित्तं, वृद्धिनिमित्तादिति, आहो स्विद्वृद्धिर्निमित्तमस्य सोऽयं वृद्धिनिमित्तः, वृद्धिनिमित्तादिति ? ॥ किं चातः ? ॥ यदि विज्ञायते वृद्धिरेव निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तादिति,—क्षैतिः सङ्गृहीतः कार्त्तिरसङ्गृहीतः । अथ विज्ञायते वृद्धिर्निमित्तमस्य[1] सोऽयं वृद्धिनिमित्तः, वृद्धिनिमित्तादिति,—कार्तिः सङ्गृहीतः क्षैतिरसङ्गृहीतः । उभयथा च फौल्लिरसङ्गृहीतः ॥ यथेच्छसि तथाऽस्तु ॥ अस्तु तावद्वृद्धिरेव निमित्तं वृद्धिनिमित्तं, वृद्धिनिमित्तादिति ॥ ननु चोक्तं—'क्षैतिः सङ्गृहीतः कार्तिरसङ्गृहीत'इति ॥ कार्तिश्च संगृहीतः ॥ कथम् ? ॥ वृद्धिर्भवति गुणो भवतीति[2] रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्त्तते[3] । अथ वा पुनरस्तु—वृद्धिनिमित्तमस्य सोऽयं वृद्धिनिमित्तः, वृद्धिनिमित्तादिति ॥ ननु चोक्तं—'कार्तिः सङ्गृहीतः क्षैतिरसङ्गृहीतः'इति ॥ क्षैतिश्च सङ्गृहीतः ॥ कथं ? ॥ यत्तद्वृद्धि-

प्र.] कार्तिरिति । नत्वस्याऽऽकारो न निमित्तं, किं तु रेफ इति प्रतिषेधो न प्राप्नोति । उभयथेति । न हि वृद्धिर्लत्वस्य निमित्तं नापि वृद्धिहेतुकात्परो निष्ठातकारः । न चाऽत्र ल्त्वनिषेध इष्यते । रेफशिरा इति । ननु चाऽक्तरूपस्याऽक्तपरिमाणस्य च वृद्धिसंज्ञाविधानात्कथमारित्यस्य वृद्धिसंज्ञा । अथ पूर्वान्तत्वाद्रेफस्य वृद्धिग्रहणेन ग्रहणमित्युच्यते तदा किमनेनोक्तेन—'रेफशिरा गुणवृद्धिसंज्ञक'इति । यद्यपि प्रसज्यमानोऽण् रपरो न भवेदपि तूत्तरकालं रपरत्वं विधीयते तथापि तद्भक्तत्वात्कार्तिः सङ्गृहीत एव । एवं तर्हि स्थितपक्षप्रदर्शनात्पूर्वोक्तदोषाऽभावः ।

उ.] मित्तक इति तदसङ्ग्रहः । नहीति । उदुपधत्वमेव हि तस्य निमित्तं, न वृद्धिः । बहुव्रीहावप्यसङ्ग्रहं दर्शयति—नापीति । यथा कार्तिरित्यत्र वृद्धिनिमित्ताद्रेफात्परो निष्ठातकारो नैवमिहेत्यर्थः । नचात्रेति । एवं च फौल्लिरनेन निषेधेनाऽसङ्गृहीत इत्यर्थः । अक्तरूपस्य—आ इत्येवं रूपस्य । अक्तपरिमाणस्य—द्विमात्रस्य । नत्वर्द्धतृतीयमात्रस्य । एवं च रेफशिरस्कस्य वृद्धिसंज्ञकत्वाऽभावात्कथं कार्तौ प्रतिषेधप्राप्तिरिति भावः । अथेति । एवं च वृद्धिग्रहणेन ग्रहणाद्वृद्धिसंज्ञकत्वव्यवहार इति भावः । किमनेनोक्तेनेत्युक्तं, तदुक्तेर्वैफल्यं स्पष्टयति—यद्यपीत्यादिना । एवं तर्हीति । प्रसज्यमानोऽण्रपर इत्यस्यैव तत्र सिद्धान्ते

१ 'वृद्धेर्नि' पा० । २ इतिः क्वचिन्न । ३ 'वर्त्यते' पा० ।

शास्त्रं तस्मिन्वृद्धिशब्दो वर्तते ॥ स तर्हि प्रतिषेधो वक्तव्यः? ॥ ॥*॥ न वा बहिरङ्गलक्षणत्वात् ॥*॥ न वा वक्तव्यः[1] ॥ किं कारणम्? ॥ 'बहिरङ्गलक्षणत्वात्'। बहिरङ्गा वृद्धिरन्तरङ्गं तत्वम्। 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥ एवं च कृत्वा त्वमपि सिद्धं भवति फौल्लिरिति ॥ [रदाभ्यां निष्ठातः]

## ल्वादिभ्यः ।८।२।४४।

॥ * ॥ ॠकारल्वादिभ्यः[2] क्तिन्निष्ठावत् ॥*॥ ॠकारल्वादिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम्। कीर्णिः गीर्णिः लूनिः धूनिः[3] ॥ ॥ * ॥ दुग्वोदीर्घश्च ॥ * ॥ दुग्वोर्दीर्घश्चेति वक्तव्यम्। आदूनः विगूनः। ॥ * ॥ पूञो विनाशे ॥ * ॥ पूञो विनाश इति वक्तव्यम्। पूना यवाः ॥ विनाश इति किमर्थं? ॥ पूतं धान्यम् ॥ * ॥ सिनोतेर्ग्रासकर्मकर्तृकस्य ॥ * ॥ सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यम्। सिनो ग्रासः स्वयमेव[4] ॥ ग्रासकर्मकर्तृकस्येति किमर्थं? ॥ सिता पाशेन सूकरी ॥ [ल्वादिभ्यः]॥

## क्षियो दीर्घात् ।८।२।४६।

---

प्र.] यत्तदिति। एवं प्रतिषेधस्य व्यापकत्वाश्रयणादनुग्रहो भवतीति गौणः शब्दार्थ आश्रीयते। फौल्लिसाधारणं परिहारं ब्रवीति—न वेति। [रदाभ्यां निष्ठातो नः]॥

ल्वादिभ्यः। कीर्णिरिति। कॄगॄलूपूञां रूपाणि। दुग्वोरिति। दु द्रु गतावित्यस्य दोर्ग्रहणं न तु टुदु उपताप इत्यस्य, सानुबन्धकत्वात्। पूना इति। अनेकार्थत्वाद्धातूनां पूङ् विनाशार्थः। सिनो ग्रास इति। बन्धनक्रियायामानुकूल्यात्तत्कर्माऽपि ग्रासः कर्तृत्वेन विवक्ष्यते। [ल्वादिभ्यः]।

---

उ.] स्थितपक्षत्वात्तदनुसारेण 'रेफाश्रिता' इत्याद्युक्तमिति भावः। यद्यपि रेफो निमित्तं, न वृद्धिर्विशिष्टा, तथापि अवयवद्वारा सैव निमित्तमिति बोध्यम्। ननु गौणमुख्यन्यायेन कथमस्य ग्रहणमत आह—एवं प्रतिषेधस्येति। [रदाभ्यां निष्ठातो नः]

ल्वादिभ्यः। ॠकारेति दीर्घग्रहणं। नत्वस्यैवायमतिदेशो न कार्यान्तरस्य। तेन पूनिरित्यादौ 'पूङश्छन्दसी'तीड् विकल्पो न। ननु टुदु इति। दूने तदर्थस्यैव प्रतीतेरिदं चिन्त्यं। 'पूञ्विनाशार्थं' इति पाठः। पूङिति त्वपपाठः। तत्र पाठे 'चोः कु'रिति कुत्वं वा। बन्धनक्रियायामिति। यदा बध्यमानः पिण्डीक्रियमाणो ग्रासो दध्यादिष्वनवशात्तत्रानुकूल्यं प्रतिपद्यते तदा कर्मणः कर्तृत्वेऽयं प्रयोगः। प्रत्युदाहरणे—पाशेनेति करणे तृतीया॥

---

१ 'वक्तव्यम्' पा०। २ 'ॠल्वादिभ्यः'। ३ 'यूनिः' पा०। ४ इदं प्रायोलुप्तम्। ५ 'पञ'।

दीर्घादिति किमर्थम् ? ॥ अक्षितमसि मा मे क्षेष्ठाः। दीर्घादिति शक्य-मकर्त्तुम्[1] ॥ कस्मान्न भवति—अक्षितमसि मा मे क्षेष्ठा इति ? ॥ निर्देशा-शादेवेदमभिव्यक्तं[2] दीर्घस्य ग्रहणमिति। यदि ह्रस्वस्य ग्रहणं स्यात् 'क्षे'रित्येव[3] ब्रूयात् ॥ नाऽत्र निर्देशः प्रमाणं शक्यं[4] कर्त्तुम्। यथैवाऽत्राऽप्राप्ता[5] विभक्ति-रेवमियङादेशोऽपि ॥ नाऽत्राऽप्राप्ता विभक्तिः, सिद्धाऽत्र विभक्तिः 'प्राति-पदिका'दिति ॥ कथं प्रातिपदिकसंज्ञा ? ॥ 'अर्थवत्प्रातिपदिक'मिति ॥

ननु चाऽधातुरिति प्रतिषेधः प्राप्नोति ॥ नैष धातुर्धातोरेषोऽनुकरणम्[6] ॥ यद्यनुकरणमियङादेशो न प्राप्नोति ॥ 'प्रकृतिवदनुकरणं भवती'तीयङादेशो भविष्यति॥ यदि 'प्रकृतिवदनुकरणं भवती'त्युच्यते स्वाद्युत्पत्तिर्न प्राप्नोति॥ एवं तर्ह्यातिदेशिकानां स्वाश्रयाण्यपि न निवर्तन्ते इति[7]। अथाप्येतन्नास्ति-[8]

---

प्र.] क्षियो। अक्षितमिति। क्षयः क्षितमिति भावे क्तः। भावश्च ण्यदर्थ इति दीर्घाऽभावाचत्वाऽभावः। क्षेरिति। इयङादेशात्परत्वाद्धेर्ङितीति गुणस्य न्याय्यत्वात्। नात्र निर्देश इति। न हीयङादेशाद्दीर्घस्य ग्रहणं प्रत्येतुं शक्यते, इयङ्निमित्तस्य विभक्तेर्दुर्लभत्वात्ततोऽप्राप्ता यथा विभक्तिः सौत्रत्वान्निर्देशस्य भव-त्येवं ह्रस्वस्यापीयङादेशः स्यादिति दीर्घग्रहणमर्थवत्। नैष धातुरिति। क्रियावा-चिनो धातुसंज्ञाविधानसामर्थ्यान्निर्देशे चाऽक्रियावाचित्वात्। प्रकृतिवदिति। अर्थभेदादनुकार्यानुकरणयोर्भेदाद्वाचनिकः कार्योऽतिदेशः। स्वाद्युत्पत्तिर्नेति। अधातुरिति प्रकृतेः प्रातिपदिकसंज्ञानिषेधादनुकरणस्यापि तत्प्रसङ्गात्। आति-देशिकानामिति। अतिदेशः प्रयोजनं येषां तान्यातिदेशिकानि। अतिदेशभा-ञ्ज्युच्यन्ते। ननु यदतिदेशकार्येणाऽविरुद्धं स्वाश्रयं कार्यं तन्मा निवृतत्, यत्तु

---

उ.] क्षियो दी। क्षयः क्षितमिति। यदा त्वकर्मकत्वात्कर्त्तरि क्तः आक्रोशदैन्ययोर्वा क्षियो वृत्तिस्तदा दीर्घसद्भावादस्योदाहरणं बोध्यम्। ननु विभक्तेर्दुर्लभत्वे तदर्थमेव यत्नः कार्यः, इयङादेशस्तु दीर्घनिर्देशे प्रमाणमेवेत्यत्राह—ततोऽप्राप्तेति। एवं च सन्देह-निवृत्त्ये 'दीर्घा'दितीति भावः। ननु 'क्षी'त्यस्य गणे पाठात्कुतो न धातुत्वमत आह—क्रियेति। निर्देशे स्वरूपपरत्वादिति भावः। निषेधादिति। पर्युदासपक्षेऽपि आनुमानिको निषेधोऽस्त्येव शास्त्रतात्पर्यविषयभूत इति भावः। अतिदेशः प्रयोजनमिति। येषामतिदेश-निमित्तकार्यमिष्यते तानीत्यर्थः। तदाह—अतिदेशभाञ्जीति। यत्तु विरुद्धमिति। प्राति-

---

१ 'वक्तुम्' पा०। २ 'वेदं व्यक्तं' पा०। ३ 'इत्येवं' पा०। ४ 'शक्यः'। ५ 'यथैव ह्यत्रा' पा०। ६ 'करणः' पा०। ७ इतिः क्वाचित्कः। ८ 'प्येतन्न आति' पा०।

'आतिदेशिकानां स्वाश्रयाण्यपि न निवर्तन्ते' इत्येवमपि न दोषः। अवश्यमत्र सर्वतो नैर्देशिकी विभक्तिर्वक्तव्या। तद्यथा—'नेर्विशः' 'परिव्यवेभ्यः क्रियः' 'विपराभ्यां जे'रिति[1] ॥ अथाप्येतन्नास्ति[2] 'प्रकृतिवदनुकरणं भवती'त्येवमपि न दोषः। धातोरजादौ यद्रूपं तदनुक्रियते ॥ [ क्षियो दीर्घात् ] ॥

प्र.] विरुद्धं तत्कथं न निवर्त्तेत ?। एवं तर्ह्यधातुरिति पर्युदासो न प्रसज्यप्रतिषेध इत्यातिदेशिकस्य कार्यस्याऽभावाद्धातोरन्यत्वात् स्वाश्रया प्रातिपदिकसंज्ञा प्रवर्तते, प्रसज्यप्रतिषेधे तु निषेध एवातिदेशिकः स्यात्। इयङादेशस्त्वातिदेशिको धातोर्विधीयमानत्वाद्भवति, स च दीर्घस्यैवेति दीर्घग्रहणमनर्थकम्। अथापीति। यद्यप्यधातुरिति प्रसज्यप्रतिषेध इति भावः। अवश्यमिति। यस्मात्प्रातिपदिकसंज्ञानिषेधादप्राप्ता यस्माच्चोत्पन्ना लुप्ता तस्मात्सर्वस्मादित्यर्थः[3]। नेर्विश इति। 'ने'रिति लुप्तविभक्तिकाव्ययानुकरणान्निर्देशाऽर्था विभक्तिः, विश इति निर्देशादेवाऽप्राप्ता विभक्तिः। इयङ् तु दीर्घानुकरणस्यैवेति दीर्घग्रहणमनर्थकम्।

अथापीति। इहानुकर्ता कदाचित्सामान्यमनुकरोति कदाचिद्विशेषम्। तत्र यदा सामान्यमनुक्रियते तदा विशेषनिबन्धनस्य कार्यस्य सामान्येऽभावात्प्रकृतावदृष्टत्वादनुकरणेऽप्यभावः। यदा तु विशेषोऽनुक्रियते तदा तन्निबन्धनं कार्यमनुकरणे प्रवर्तते। तत्र यदा धात्वधातुसामान्यं क्षिमात्रमनुक्रियते तदेयङोऽप्राप्तिरिति 'चिक्षियतु'रित्यादौ कृतेयङादेशस्येदमनुकरणमिति दीर्घादिति कर्त्तव्यम्।

उ.] पदिकत्वं। तद्धि आतिदेशिकतदभावेन विरुद्धम्। प्रसज्यप्रतिषेधेऽस्त्विति। वस्तुतः पर्युदासपक्षेऽप्यतिदेशेन धातुत्वे बोधिते धातुभिन्नत्वाऽभावेन प्रातिपदिकत्वाऽभावोऽतिदेशफलमिति तत्प्रवृत्तिरस्त्येव। यद्यप्येतत्साक्षान्न शास्त्रीयं तथापि शास्त्रतात्पर्यविषयं भवत्येव। तद्विरुद्धं च स्वाऽऽश्रयं प्रातिपदिकत्वं न भवेत्, यथाऽपचत्तण्डुलानित्यादौ प्रातिपदिकत्वं नेति वक्तुं शक्यम्। 'अथाप्येतन्ने'ति भाष्यस्याऽयमेवाऽर्थः। 'विरुद्धानि स्वाऽऽश्रयाणि निवर्त्तन्त एवे'ति कैयटोक्तव्याख्या त्वयुक्ता, सामान्यप्रवृत्तभाष्यस्य विनाऽनुपपत्तिमधातुरितिप्रातिपदिकसंज्ञारूपविशेषपरत्वाऽयोगात्, 'आतिदेशिकाना'मित्यादिबहुवचनाऽसङ्गतेश्च। 'ब्राह्मणवत्क्षत्रिय'इत्यादावतिदेशविरुद्धमद्यपानादिनिवृत्तेश्च। विश इति। 'अप्राप्ता विभक्तिर्निर्देशादेवे'त्यन्वयः। अप्राप्तिश्चानुकरणत्वेन धातुत्वादिति भावः। ननु वचने जाग्रति कथं नास्तीत्युच्यतेऽत आह—इहानुकर्त्तेति। सामान्यं—धात्वधातुसाधारणं क्षिरूपमित्यर्थः। विशेषमिति। धातुमात्रमित्यर्थः। अग्रे 'धात्वधातुसामान्यं क्षिमात्र'मिति पाठः। तदेयङोऽप्राप्तिरिति। धातुत्वाऽभावादिति भावः। कर्तव्यमिति। इदमेव दीर्घग्रहण-

1 'जेरित्येवमर्थम्' पा०। 2 'अथवा' पा०। 3 इदं क्वचिन्न।

दीर्घादिति किमर्थम् ? ॥ अक्षितमसि मा मे क्षेष्ठाः। दीर्घादिति शक्यमकर्त्तुम्[1] ॥ कस्मान्न भवति—अक्षितमसि मा मे क्षेष्ठा इति ? ॥ निर्देशादेवेदमभिव्यक्तं[2] दीर्घस्य ग्रहणमिति। यदि ह्रस्वस्य ग्रहणं स्यात् 'क्षे'रित्येव[3] ब्रूयात् ॥ नाऽत्र निर्देशः प्रमाणं शक्यं कर्त्तुम्[4]। यथैवाऽत्राऽप्राप्ता[5] विभक्तिरेवमियङादेशोऽपि ॥ नाऽत्राऽप्राप्ता विभक्तिः, सिद्धाऽत्र विभक्तिः 'प्रातिपदिका'दिति ॥ कथं प्रातिपदिकसंज्ञा ? ॥ 'अर्थवत्प्रातिपदिक'मिति ॥

ननु चाऽधातुरिति प्रतिषेधः प्राप्नोति ॥ नैष धातुर्धातोरेषोऽनुकरणम्[6] ॥ यद्यनुकरणमियङादेशो न प्राप्नोति ॥ 'प्रकृतिवदनुकरणं भवती'तीयङादेशो भविष्यति ॥ यदि 'प्रकृतिवदनुकरणं भवती'त्युच्यते स्वाद्युत्पत्तिर्न प्राप्नोति॥ एवं तर्ह्यातिदेशिकानां स्वाश्रयाण्यपि न निवर्तन्ते इति[7]। अथाप्येतन्नास्ति-

प्र.] क्षियो। अक्षितमिति। क्षयः क्षितमिति भावे क्तः। भावश्च ण्यदर्थ इति दीर्घाऽभावान्नत्वाऽभावः। क्षेरिति। इयङादेशात्परत्वाद्धेर्ङितीति गुणस्य न्याय्यत्वात्। नात्र निर्देश इति। न हीयङादेशाद्दीर्घस्य ग्रहणं प्रत्येतुं शक्यते, इयङ्निमित्तस्य विभक्तेर्दुर्लभत्वात्ततोऽप्राप्ता यथा विभक्तिः सौत्रत्वान्निर्देशस्य भवत्येवं ह्रस्वस्यापीयङादेशः स्यादिति दीर्घग्रहणमर्थवत्। नैष धातुरिति। क्रियावाचिनो धातुसंज्ञाविधानसामर्थ्यान्निर्देशे चाऽक्रियावाचित्वात्। प्रकृतिवदिति। अर्थभेदादनुकार्यानुकरणयोर्भेदाद्वाचनिकः कार्याऽतिदेशः। स्वाद्युत्पत्तिर्नेति। अधातुरिति प्रकृतेः प्रातिपदिकसंज्ञानिषेधादनुकरणस्यापि तत्प्रसङ्गात्। आतिदेशिकानामिति। अतिदेशः प्रयोजनं येषां तान्यातिदेशिकानि। अतिदेशभाञ्ज्युच्यन्ते। ननु यदतिदेशकार्येणाऽविरुद्धं स्वाश्रयं कार्यं तन्मा निवृतत्, यत्तु

उ.] क्षियो दी। क्षयः क्षितमिति। यदा त्वकर्मकत्वात्कर्त्तरि क्तः आक्रोशदैन्ययोर्वा क्षियो वृत्तिस्तदा दीर्घसद्भावादस्योदाहरणं बोध्यम्। ननु विभक्तेर्दुर्लभत्वे तदर्थमेव यत्नः कार्यः, इयङादेशस्तु दीर्घनिर्देशे प्रमाणमेवेत्यत्राह–ततोऽप्राप्तेति। एवं च सन्देहनिवृत्तये 'दीर्घा'दितीति भावः। ननु 'क्षी'त्यस्य गणे पाठात्कुतो न धातुत्वमत आह–क्रियेति। निर्देशे स्वरूपपरत्वादिति भावः। निषेधादिति। पर्युदासपक्षेऽपि आनुमानिको निषेधोऽस्त्येव शास्त्रतात्पर्यविषयभूत इति भावः। अतिदेशः प्रयोजनमिति। येषामतिदेशनिमित्तकार्यमिष्यते तानीत्यर्थः। तदाह–अतिदेशभाञ्जीति। यत्तु विरुद्धमिति। प्राति-

१ 'वक्तुम्' पा०। २ 'वेदं व्यक्तं' पा०। ३ 'इत्येवं' पा०। ४ 'शक्यः'। ५ 'यथैव अत्रा' पा०। ६ 'करणः'पा०। ७ इतिः क्वाचित्कः। ८ 'प्येतन्न आति' पा०।

'आतिदेशिकानां स्वाश्रयाण्यपि न निवर्तन्ते' इत्येवमपि न दोषः। अवश्यमत्र सर्वतो नैर्देशिकी विभक्तिर्वक्तव्या। तद्यथा—'नेर्विशः' 'परिव्यवेभ्यः क्रियः' 'विपराभ्यां जे'रिति ॥ अथाप्येतन्नास्ति 'प्रकृतिवदनुकरणं भवती'त्येवमपि न दोषः। धातोरजादौ यद्रूपं तदनुक्रियते ॥ [ क्षियो दीर्घात् ] ॥

---

प्र.] विरुद्धं तत्कथं न निवर्त्तेत ?। एवं तर्ह्यधातुरिति पर्युदासो न प्रसज्यप्रतिषेध इत्यातिदेशिकस्य कार्यस्याऽभावाद्धातोरन्यत्वात् स्वाश्रया प्रातिपदिकसंज्ञा प्रवर्तते, प्रसज्यप्रतिषेधे तु निषेध एवातिदेशिकः स्यात्। इयङादेशस्त्वातिदेशिको धातोर्विधीयमानत्वाद्भवति, स च दीर्घस्यैवेति दीर्घग्रहणमनर्थकम्। अथापीति। यद्यप्यधातुरिति प्रसज्यप्रतिषेध इति भावः। अवश्यमिति। यस्मात्प्रातिपदिकसंज्ञानिषेधादप्राप्ता यस्माच्चोत्पन्ना लुप्ता तस्मात्सर्वस्मादित्यर्थः। नेर्विश इति। 'ने'रिति लुप्तविभक्तिकाव्ययानुकरणान्निर्देशाऽर्थो विभक्तिः, विश इति निर्देशादेवाऽप्राप्ता विभक्तिः। इयङ् तु दीर्घानुकरणस्यैवेति दीर्घग्रहणमनर्थकम्।

अथापीति। इहानुकर्ता कदाचित्सामान्यमनुकरोति कदाचिद्विशेषम्। तत्र यदा सामान्यमनुक्रियते तदा विशेषनिबन्धनस्य कार्यस्य सामान्येऽभावात्प्रकृतावदृष्टत्वादनुकरणेऽप्यभावः। यदा तु विशेषोऽनुक्रियते तदा तन्निबन्धनं कार्यमनुकरणे प्रवर्तते। तत्र यदा धात्वधातुसामान्यं क्षिमात्रमनुक्रियते तदेयङोऽप्राप्तिरिति 'चिक्षियतु'रित्यादौ कृतेयङादेशस्येदमनुकरणमिति दीर्घादिति कर्त्तव्यम्।

---

उ.] पदिकत्वं। तद्धि आतिदेशिकतदभावेन विरुद्धम्। प्रसज्यप्रतिषेधेत्विति। वस्तुतः पर्युदासपक्षेऽप्यतिदेशेन धातुत्वे बोधिते धातुभिन्नत्वाऽभावेन प्रातिपदिकत्वाऽभावोऽतिदेशफलमिति तत्प्रवृत्तिरस्त्येव। यद्यप्येतत्साक्षान्न शास्त्रीयं तथापि शास्त्रतात्पर्यविषयं भवत्येव। तद्विरुद्धं च स्वाऽऽश्रयं प्रातिपदिकत्वं न भवेत्, यथाऽपचत्तण्डुलानित्यादौ प्रातिपदिकत्वं नेति वक्तुं शक्यम्। 'अथाप्येतन्ने'ति भाष्यस्याऽयमेवाऽर्थः। 'विरुद्धानि स्वाऽऽश्रयाणि निवर्त्तन्त एवे'ति कैयटोक्तव्याख्या त्वयुक्ता, सामान्यप्रवृत्तभाष्यस्य विनाऽनुपपत्तिमधातुरितिप्रातिपदिकसंज्ञारूपविशेषपरत्वाऽयोगात्, 'आतिदेशिकाना'मित्यादिबहुवचनाऽसङ्गतेश्च। 'ब्राह्मणवत्क्षत्रिय'इत्यादावतिदेशविरुद्धमद्यपानादिनिवृत्तेश्च। विश इति। 'अप्राप्ता विभक्तिर्निर्देशादेवे'त्यन्वयः। अप्राप्तिश्चानुकरणत्वेन धातुत्वादिति भावः। ननु वचने जाग्रति कथं नास्तीत्युच्यतेऽत आह—इहानुकर्त्तेति। सामान्यं—धात्वधातुसाधारणं क्षिरूपमित्यर्थः। विशेषमिति। धातुमात्रमित्यर्थः। अग्रे 'धात्वधातुसामान्यं क्षिमात्र'मिति पाठः। तदेयङोऽप्राप्तिरिति। धातुत्वाऽभावादिति भावः। कर्त्तव्यमिति। इदमेव दीर्घग्रहण-

---

१ 'जेरित्येवमर्थम्' पा०। २ 'अथवा' पा०। ३ इदं क्वचिन्न।

अञ्चोऽनपादाने ।८।२।४८ ।

॥ * ॥ अञ्चेर्नत्वे व्यक्तप्रतिषेधः ॥ * ॥ अञ्चेर्नत्वे व्यक्तस्य प्रतिषेधो वक्तव्यः । व्यक्तमनृतं[2] कथयतीति ॥ * ॥ अञ्जिविज्ञानात्सिद्धम् ॥ * ॥ [अञ्जिविज्ञानात्सिद्धमेतत्[3] ] ॥ नैतदञ्चे रूपम् । अञ्जेरेतद्रूपम् ॥ अञ्चत्यर्थो वै गम्यते ॥ कः पुनरञ्चत्यर्थः ?॥ अञ्चतिः प्रकाशने वर्तते । अञ्चितं गच्छति, प्रकाशयत्यात्मानमिति गम्यते ॥ न वै लोकेऽञ्चितं गच्छतीति प्रकाशनं गम्यते ॥ किं तर्हि ? ॥ समाधानं गम्यते । समाहितो भूत्वा गच्छतीति ॥

एवं तर्ह्यञ्चतेरङ्कः, अङ्कश्च प्रकाशनम् । अङ्किता गाव इत्युच्यते, अन्याभ्यो गोभ्यः प्रकाश्यन्ते[4] ॥ * ॥ अञ्चत्यर्थ इति चेदङ्केस्तदर्थत्वात्सिद्धम् ॥ * ॥

प्र.] अञ्चो । अञ्चेरिति । प्रकाशनार्थे व्यक्तशब्दे नत्वं प्राप्नोति, न चेष्यते इति वचनम् । अञ्चितं गच्छतीति । गमनक्रियाविशेषणमेतत् । प्रकाशत्वेनच गमनं पूज्यत इति पूजानियन्धनो नलोपप्रतिषेधः । न वै लोक इति । सर्वस्य गन्तुस्तत्समये तस्य च गमनस्य प्रकाशत्वादिति भावः । समाधानमिति । गमनस्याऽव्याकुलत्वमि[ती]त्यर्थः । तथा च 'नागाश्वाञ्चितगामिन' इति प्रयोगो दृश्यते । गमनस्य च समाधानमेव पूजा । अङ्कश्चेति । प्रकाश्यतेऽनेनेति ल्युट् । 'अङ्क' इत्यत्र तु 'हलश्चे'ति करणे घञ् । 'अङ्क पदलक्षणयो'रित्यस्याप्येतद्रूपं भवति । अञ्जेस्त्वङ्क इति न सिध्यति । अङ्किता इति । अङ्कयुक्ताः कृता इत्यर्थः । मत्वन्तादङ्कशब्दात्तत्करोतीति णिचि कृत इष्टवद्भावान्मतु-

उ.] अत्र विभक्तिकरणं चातिदेशाऽनित्यत्वे ज्ञापकमिति तत्त्वम् । 'सामान्यानुकरण'मिति तु चिन्त्यं; फलाऽभावात् । न च 'चिक्षियतु'रित्यादिरूपस्याऽनुकरणे कथं ततः परा निष्ठा, न हि तद्रूपानुकरणेन धातुः प्रत्याययितुं शक्यो नापि 'क्षि' इति रूपमिति वाच्यं, दीर्घादिति सामर्थ्येन क्षिय इति दीर्घविधानसामर्थ्येन च स्वानुकार्यमूलभूतस्यापि ग्रहणज्ञापनान्न दोषः ॥

अञ्चोऽनपादाने । प्रकाशनेति । 'समक्क'इत्युदाहरणेषु गतिरेवाञ्चत्यर्थ इति भावः । नन्वञ्चितमित्यत्र प्रकाशनार्थत्वे पूजार्थत्वाऽभावान्नाञ्चेरिति नलोपनिषेधो नस्यात्, अञ्चेः पूजायामितीट् च न स्यादत आह–प्रकाशत्वेनेति । भाष्ये–'प्रकाशयत्यात्मान'-मित्यादि फलितार्थकथनं, गमनस्य प्रकाशत्वं कर्तुः प्रकाशत्व एव भवतीति भावः । प्रतिषेध इति । इट् चेत्यपि वोध्यम् । सर्वस्य गन्तुरिति । एतच्च तदर्थकविशेषणवैयर्थ्यं, नापि तेन गमनस्य पूजाप्रतीतिरिति भावः । तत्समये–गमनसमये, सर्वो–गन्ता, तदीयं गमनं च प्रकाशमानमेवेत्यर्थः । पूजेति । पूजाप्रयोजकमिति भावः । 'अञ्चतेरङ्क'

१ इदं प्रायोलुप्तम् । २ 'मनृतं' । ३ इदं सर्वत्र लुप्तम् । ४ 'प्रकाशन्ते' । ५ 'तदर्थात्' ।

अञ्चत्यर्थे इति चेदञ्जिरप्यञ्चत्यर्थे वर्तते ॥ कथं पुनरन्यो नामाऽन्यस्यार्थे वर्तते ?। कथमञ्जिरञ्चत्यर्थे वर्तते ?॥ अनेकार्था अपि धातवो भवन्तीति[2] ।। अस्ति पुनः क्व चिदन्यत्राऽप्यञ्जिरञ्चत्यर्थे वर्तते ? ॥ अस्तीत्याह । अञ्जेरञ्जनम्, अञ्जनं च प्रकाशनम् । 'अङ्क्तेऽक्षिणी' इत्युच्यते यत्तत्सितं[3] चाऽसितं चैतत्प्रकाशयति[4] । तथाऽञ्जेर्व्यञ्जनं, व्यञ्जनं च प्रकाशनम् । यत्तत्स्नेहेन मधुरेण च जडीकृतानामिन्द्रियाणां स्वस्मिन्नात्मनि व्यवस्थापनं स रागस्तद्व्यञ्जनम् ।' अन्वर्थं खल्वपि निर्वचनं 'व्यज्यतेऽनेनेति व्यञ्जन'मिति ॥ [ अञ्चोऽनपा ]।

प्र.] व्लुकि टिलोपे च रूपम् । अञ्जेरिति । ननु यद्यप्यञ्जिस्तदर्थस्तथाप्यञ्चतेः सोर्थो भवतीति तस्य 'व्यक्त'मिति न सिध्यति, 'व्यक्क'मिति प्राप्नोति। एवं तर्हि 'व्यक्क'मित्युक्ते प्रकाशनं न गम्यत इति व्यक्तशब्दप्रकृतिरञ्जिरेव प्रकाशने वर्तते न त्वञ्चिरित्यदोषः। कथं पुनरिति । अर्थान्तरे रूढोऽन्यः—अन्यस्याऽर्थान्तरवाचिनोऽर्थे—कथं प्रवर्तत इत्यर्थः । अनेकार्था इति । धातुपाठे तु क्रियावाचित्वप्रदर्शनपरोऽर्थनिर्देशो न तु नियमार्थः। तथा च 'कुर्द खुर्द गुर्द गुद क्रीडायामेवे'त्येवकारः पठितः । अस्ति पुनरिति । अन्यत्र दर्शने व्यक्तशब्देऽपि तदर्थत्वमञ्जेः शक्यते साधयितुं नाऽन्यथेति प्रश्नः । अञ्जनमिति । अज्येते येनाऽक्षिणी तदञ्जनम् । तत्रैतत्स्याद्रूढिशब्दोऽयम्, रूढिषु च व्युत्पत्तिनिमित्तमेव क्रिया न तु शब्दप्रवृत्तिनिमित्तमित्याशङ्क्याऽरूढिशब्दमुदाहरति—अङ्क्त इति । व्यत्ययेन छन्दस्यात्मनेपदम् । यत्तत्सितं चेति । सिताऽसिते सुतरां विभागेन प्रकाशयतीत्यर्थः । तथेति । व्यज्यतेऽनेन रस इति व्यञ्जनम् । राग इति । रज्यतेऽनेनेति रागो व्यञ्जनमेव। अन्वर्थमिति । यौगिको व्यञ्जनशब्द इत्यर्थः ।

उ.]इति भाष्यादङ्क्त पदे लक्षणे चेति धातुरनार्पं इत्यन्ये। टिलोपे चेति। विन्मतोर्लुकि भाष्यकारेण टिलोपस्याऽनिष्टेश्चिन्त्यमिदं, तस्मादङ्कशब्दात्तारकादित्वादितच्प्रत्ययेऽङ्कित इति साध्वित्यन्ये । नन्विति । अनिष्टनिवृत्त्यर्थं वचनमावश्यकमिति भावः । नत्वञ्चिरिति । प्रकाशनार्थाञ्चतेरनभिधानेन निष्ठाऽभाव इति भावः । अर्थान्तर इति । 'अञ्चू व्यक्तिम्रक्षणगति'ष्विति पाठात् । अर्थान्तरेति । प्रकाशनादिवृत्तेः । अन्यत्रेति। अन्यत्राऽदर्शने तु विवादविषये निर्णेतुं न शक्यत इत्यर्थः । अज्येते—प्रकाश्येते इत्यर्थः । अञ्जः परस्मैपदित्वादाह—व्यत्ययेनेति । व्यज्यतेऽनेनेति । जिह्वाया जडीभावनिराकरणेन रसो व्यज्यत इत्यर्थः । भाष्येऽपि—'इन्द्रिय'शब्देन जिह्वैव । व्यक्तिबहुत्वाद्बहुवचनं । भाष्ये—स्वस्मिन्ना-

१ 'रञ्चेरर्थे' । २ इतिः क्वचिन्न । ३ 'यत्तास्मन्सितं' पा० । ४ 'यते' पा० ।

## निर्वाणोऽवाते ।८।२।५०।

॥ * ॥ अवाताऽभिधाने ॥ * ॥ अवाताभिधान इति वक्तव्यम् । इहापि यथा स्यात्—निर्वाणोऽग्निर्वातेन । निर्वाणः प्रदीपो वातेन[इति][निर्वाणोऽवाते]॥

## अनुपसर्गात्फुल्लक्षीवकृशोल्लाघाः ।८।२।५५।

अनुपसर्गादित्युच्यते तत्रेदं न सिध्यति—परिकृशमिति ॥ * ॥ कृशेः[2] क एषे[3] विहित इगुपधात् ॥ * ॥ नैतन्निष्ठान्तम् ॥ किं तर्हि ? ॥ कृश एष इगुपधात्को विहितः ॥ नैवं शक्यम्[4] ॥*॥ स्वरे हि दोषो भवति परिकृशे ॥*॥ नैवं शक्यम्[4] ॥ इह हि परिकृश इति, स्वरे दोषः स्यात् । 'अन्तः' 'थाथघञ्क्ताजबित्रकाणा'मित्येष स्वरः प्रसज्येत ॥ * ॥ पदस्य[5] लोपो विहित इति मतम् ॥ * ॥ एवं तर्हि पदस्य लोपोऽत्र[1] द्रष्टव्यः । पर्यागतः कार्श्येन

---

प्र.] निर्वाणोऽवाते । अवाताभिधान इति । तेन 'निर्वातो वात' इत्यत्रैव नत्वनिषेधो न तु भावे निष्ठायामिति 'निर्वाणं वातेने'ति भाष्यमिति वार्तिककारस्य दर्शनम् । अन्ये तु वातकर्तृके धात्वर्थे सर्वत्र निषेधमिच्छन्ति—'निर्वातो वातो' 'निर्वातं वातेने'ति । 'निर्वाणः प्रदीपो वातेने'त्यत्र तु वातः करणमिति प्रतिषेधाऽभावः । [ निर्वाणोऽवाते ] ।

अनुपसर्गात् । यद्यपि फुल्लादयः पचाद्यचीगुपधलक्षणे के च सिध्यन्ति तथापि 'निष्ठा च द्व्यजना'दित्यादिकार्यसिद्धये क्षीवितोद्यनिष्टशब्दनिवृत्तये च निपातनम् । स्वर इति । तनूकरणवृत्तेः कर्मणि क्ते 'गतिरनन्तर' इत्याद्युदात्तं पदं भवति । तनूभवनवृत्तेस्तु कर्त्तरि क्तेऽन्[6]तोदात्तं पदं स्यात् । पदस्येति । गम्यमानाऽर्थत्वा-

---

उ.] त्मनीति । रसास्वादग्राहकत्वलक्षणे स्वस्वरूपे इत्यर्थः । यौगिक इति । न तु क्रमुकादिवद्रूढ इत्यर्थः । [ अङ्क्षोऽनपादाने ] ॥

निर्वाणोऽवाते । तेनेति । वाते निष्ठान्तेनाभिधेये नेत्यर्थः । इत्यत्रैवेति । वातेरकर्मकत्वात्कर्तरि क्तः । अन्येस्त्विति । अत्राऽरुचिस्तु भाष्यवार्तिकविरोधः, कर्त्रन्तरानुपादानाद्वातःकरणमित्यपि चिन्त्यम् । [ निर्वाणोऽवाते ] ॥

अनुपसर्गात्फुल्ल । पचाद्यचीति । फुल्लक्षीवलाघृधातुभ्य इत्यर्थः । कृशेश्चेगुपधलक्षणे के कृश इति सिद्धं । ननु निष्ठान्तेऽपि थाथादिस्वरेण भाव्यमिति कः स्वरे दोषोत आह—तनूकरणेति । तनूभवनेति । तदर्थेऽकर्मकत्वात्कर्तरि क्तः स्यादिति थाथादि-

---

१ इदं प्रायो लुप्तम् । २ श्लोकवार्त्तिकमेतत् ॥ 'कृशे' पा० । ३ 'एव' पा० । ४ इदं क्वचिन्न । ५ 'फुल्लिता' पा० । ६ 'कार्तरिके' इति [illegible]

परिक्लिशः ॥ * ॥ जगत्यनूना भवति हि रुचिरा ॥ * ॥ [ जगत्यनूना[2] भवति हि रुचिरा ] ॥ * ॥ फलेर्ल्त्वे उत्पूर्वस्योपसङ्ख्यानम् ॥ * ॥ फलेर्ल्त्वे उत्पूर्वस्योपसङ्ख्यानं कर्तव्यम् । उत्फुल्लो[3]ऽनृतं कथयति ॥ अत्यल्पमिदमुच्यते उत्पूर्वादिति ॥*॥ उत्फुल्लसंफुल्लयोरिति वक्तव्यम्[4] ॥*॥ उत्फुल्लः । संफुल्लः ॥

क्लिशः क एष हि विहित इगुपधात्स्वरे हि दोषो भवति परिक्लिशे ॥

पदस्य लोपो विहित इति मतं जगत्यनूना भवति हि रुचिरा ॥ १ ॥

## नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ।८।२।५६।

किमयं विधिराहो स्वित्प्रतिषेधः ? ॥ किं चातः ? ॥ यदि तावद्विधिर्नकारग्रहणं कर्तव्यम् ॥ न कर्तव्यं । प्रकृतमनुवर्तते ॥ क्व प्रकृतं ?॥ 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति ॥ तद्वा अनेकेन[5] निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम् ॥ अथ प्रतिषेधो, ह्रीग्रहणमनर्थकं,[6] न ह्येतस्माद्विधिरस्तीति ॥ यथेच्छसि तथास्तु ॥ अस्तु तावद्विधिः ॥ ननु चोक्तं–"नकारग्रहणं

---

प्र.] दप्रयोग एव लोपस्तत्र गमिं प्रति परिरुपसर्गो न तु क्लिशिमित्यनुपसर्गत्वात्परेर्निष्ठान्त एव क्लिशशब्दः । अव्ययस्वरेणाद्युदात्तः परिक्लिशशब्दः, परेर्गतित्वाऽभावात् । जगतीति । येयं परिक्लिशशब्दस्य व्युत्पत्तिः प्रदर्शिता सा रुचिरा अनूना–परिपूर्णा, रूपे स्वरे च दोषाऽभावात् । [अनुपसर्गात्फुल्ल] ॥

नुदविद । किमयमिति । कश्चिद्विधिनाऽर्थी, कश्चित्निषेधेन, ततो वक्ष्यमाणोऽभिप्रायः । नकारग्रहणमिति । प्रतिषेधे तु नुदादिभ्यो यत्प्राप्नोति तन्न

---

उ.] स्वरेणान्तोदात्तः स्यात्, तच्च नेष्यत इति तनूकरणवृत्तिरेवात्र क्लिशिः । एवं चाद्युदात्तत्वमेवेष्यते, न च क्लिशेः कर्तरि के तत्सिध्यतीति भावः । 'कर्तरि के'इति पाठस्तु युक्तः । निष्ठान्त एवेति । एवशब्दः प्रसिद्धौ । कथं पुनरेवं सतीष्टस्वरोऽत आह—अव्ययस्वरेणेति । 'तत्पुरुषे तुल्यार्थे'त्यनेन । गतित्वाऽभावादिति । तेन थाथघञित्यन्तोदात्तत्वं नेतिभावः । भाष्ये-पर्यागतः कार्श्येनेति । परिक्लिशशब्दे क्लिशशब्दो भावप्रधानः । क्लिशत्वेन परितः प्राप्त इत्यर्थः । तेन परितः क्लिश इत्यर्थलाभ इति भावः । जगति–शब्दव्यवहारे सर्वत्र । [ अनुपसर्गात्फुल्ल ] ॥

नुदविदोन्द । कश्चिदिति । ह्रीधातुः । तस्याऽप्राप्तत्वादिति भावः । कश्चिदिति । तद्व्यतिरिक्तः सर्वः । तेषां प्राप्तत्वादिति भावः । ननु प्रतिषेधपक्षेऽपि निषेध्यसमर्पणाय नकारग्रहणं कर्तव्यमेवेत्यत आह-प्रतिषेधे त्विति । उत्तरसूत्रस्थो नमत्रैव पठनीय इति

---

१ 'पर्यागतं परिक्लिशं' पा० । २ इदं व्याख्या भाष्यं लुप्तं स्यात् । ३ 'नूनं' पा० । ४ भाष्यवार्त्तिकमन्यस्य वा वार्त्तिकम् । ५ 'अनेकनिपाते' पा० । ६ 'अनर्थकं भवति' पा० ।

## निर्वाणोऽवाते ।८।२।५०।

॥ * ॥ अवाताऽभिधाने ॥ * ॥ अवाताभिधान इति वक्तव्यम् । इहापि यथा स्यात्—निर्वाणोऽग्निर्वातेन । निर्वाणः प्रदीपो वातेन[1 इति][निर्वाणोऽवाते]॥

## अनुपसर्गात्फुल्लक्षीवकृशोल्लाघाः ।८।२।५५ ।

अनुपसर्गादित्युच्यते तत्रेदं न सिध्यति—परिकृशमिति ॥ * ॥ कृशेः[2] क एष विहित इगुपधात् ॥ * ॥ नैतद्विष्ठान्तम् ॥ किं तर्हि ? ॥ कृश एष[3] इगुपधात्को विहितः ॥ नैवं शक्यम्[4] ॥*॥ स्वरे हि दोषो भवति परिकृशे ॥*॥ नैवं शक्यम्[4] ॥ इह हि परिकृश इति, स्वरे दोषः स्यात् । 'अन्तः' 'थाथघञ्क्ताजबित्रकाणा'मित्येष स्वरः प्रसज्येत ॥ * ॥ पदस्य[5] लोपो विहित इति मतम् ॥ * ॥ एवं तर्हि पदस्य लोपोऽत्र[1] द्रष्टव्यः । पर्यागतः कार्श्येन

---

प्र.] निर्वाणोऽवाते । अवाताभिधान इति । तेन 'निर्वातो वात' इत्यत्रैव नत्वनिषेधो न तु भावे निष्ठायामिति 'निर्वाणं वातेने'ति भाष्यमिति वार्तिककारस्य दर्शनम् । अन्ये तु वातकर्तृके धात्वर्थे सर्वत्र निषेधमिच्छन्ति—'निर्वातो वातो' 'निर्वातं वातेने'ति । 'निर्वाणः प्रदीपो वातेने'त्यत्र तु वातः करणमिति प्रतिषेधाऽभावः । [ निर्वाणोऽवाते ] ।

अनुपसर्गात् । यद्यपि फुल्लादयः पचाद्यचीगुपधलक्षणे के च सिध्यन्ति तथापि "निष्ठा च द्व्यजना'दित्यादिकार्यसिद्धये क्षीबितोद्यनिष्टशब्दनिवृत्तये च निपातनम् । स्वर इति । तनूकरणवृत्तेः कर्मणि क्ते 'गतिरनन्तर' इत्याद्युदात्तं पदं भवति । तनूभवनवृत्तेस्तु कर्त्तरि क्तेऽ[6]न्तोदात्तं पदं स्यात् । पदस्येति । गम्यमानाऽर्थत्वा-

---

उ.] त्मनीति । रसास्वादग्राहकत्वलक्षणे स्वस्वरूपे इत्यर्थः । यौगिक इति । न तु क्रमुकादिवद्रूढ इत्यर्थः । [ अञ्चोऽनपादाने ] ॥

निर्वाणोऽवाते । तेनेति । वाते निष्ठान्तेनाभिधेये नेत्यर्थः । इत्यत्रैवेति । वातेरकर्मकत्वात्कर्तरि क्तः । अन्येत्त्विति । अत्राऽरुचिस्तु भाष्यवार्तिकविरोधः, कर्त्रन्तरानुपादानाद्वातःकरणमित्यपि चिन्त्यम् । [ निर्वाणोऽवाते ] ॥

अनुपसर्गात्फुल्ल । पचाद्यचीति । फुल्लक्षीवलाघृधातुभ्य इत्यर्थः । कृशेश्चेगुपधलक्षणे के कृश इति सिद्धं । ननु निष्ठान्तेऽपि थाथादिस्वरेण भाव्यमिति कः स्वरे दोषोऽत आह—तनूकरणेति । तनूभवनेति । तदर्थेऽकर्मकत्वात्कर्तरि क्तः स्यादिति थाथादि-

---

१ इदं प्रायो लुप्तम् । २ श्लोकवार्त्तिकमेतत् ॥ 'कृशे' पा० । ३ 'एव' पा० । ४ इदं क्वचिन्न । ५ 'फुल्लिता' पा० । ६ 'कर्त्तरिक्ते' इति नागेशसंमतः पाठः ।

परिक्लिशः[1] ॥ * ॥ जगत्यनूना भवति हि रुचिरा ॥ * ॥ [ जगत्यनूना[2] भवति हि रुचिरा ] ॥ * ॥ फलेर्लत्वे उत्पूर्वस्योपसङ्ख्यानम् ॥ * ॥ फलेर्लत्वे उत्पूर्वस्योपसङ्ख्यानं कर्तव्यम्। उत्फुल्लो[3]ऽनृतं कथयति॥ अत्यल्पमिदमुच्यते उत्पूर्वादिति ॥*॥ उत्फुल्लसंफुल्लयोरिति वक्तव्यम्[4] ॥*॥ उत्फुल्लः। संफुल्लः ॥

क्लिशेः क एष हि विहित इगुपधात्स्वरे हि दोषो भवति परिक्लिशे ॥
पदस्य लोपो विहित इति मतं जगत्यनूना भवति हि रुचिरा ॥ १ ॥

## नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ।८।२।५६ ।

किमयं विधिराहो स्वित्प्रतिषेधः ? ॥ किं चातः ? ॥ यदि तावद्विधिर्नकारग्रहणं कर्तव्यम् ॥ न कर्तव्यं । प्रकृतमनुवर्तते ॥ क्व प्रकृतं ?॥ 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति ॥ तद्वा अनेकेन[5] निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम् ॥ अथ प्रतिषेधो, ह्रीग्रहणमनर्थकं[6], न ह्येतस्माद्विधिरस्तीति ॥ यथेच्छसि तथास्तु ॥ अस्तु तावद्विधिः ॥ ननु चोक्तं–"नकारग्रहणं

प्र.] दप्रयोग एव लोपस्तत्र गमिं प्रति परिरुपसर्गो न तु क्लिशिमित्यनुपसर्गत्वात्परेर्निष्ठान्त एव क्लिशशब्दः । अव्ययस्वरेणाद्युदात्तः परिक्लिशशब्दः, परेर्गतित्वाऽभावात् । जगतीति । येयं परिक्लिशशब्दस्य व्युत्पत्तिः प्रदर्शिता सा रुचिरा अनूना–परिपूर्णा, रूपे स्वरे च दोषाऽभावात् । [अनुपसर्गात्फुल्ल] ॥

नुदविद । किमयमिति । कश्चिद्विधिनाऽर्थी, कश्चिन्निषेधेन, ततो वक्ष्यमाणोऽभिप्रायः । नकारग्रहणमितिं । प्रतिषेधे तु नुदादिभ्यो यत्प्राप्नोति तन्न

उ.] स्वरेणान्तोदात्तः स्यात्, तच्च नेष्यत इति तनूकरणवृत्तिरेवात्र क्लिशिः । एवं चाद्युदात्तत्वमेवेष्यते, न च क्लिशेः कर्तरि क्ते तत्सिध्यतीति भावः । 'कर्तरि क्ते' इति पाठस्तु युक्तः । निष्ठान्त एवेति । एवशब्दः प्रसिद्धौ । कथं पुनरेवं सतीष्टस्वरोऽत आह–अव्ययस्वरेणेति । 'तत्पुरुषे तुल्यार्थे'त्यनेन । गतित्वाऽभावादिति । तेन थाथघञित्यन्तोदात्तत्वं नेतिभावः। भाष्ये-पर्यागतः काश्येनेति। परिक्लिशशब्दे क्लिशशब्दो भावप्रधानः। क्लिशत्वेन परितः प्राप्त इत्यर्थः। तेन परितः क्लिश इत्यर्थलाभ इति भावः। जगति–शब्दव्यवहारे सर्वत्र। [ अनुपसर्गात्फुल्ल ] ॥

नुदविदोन्द । कश्चिदिति । ह्रीधातुः । तस्याऽप्राप्तत्वादिति भावः । कश्चिदिति । तद्व्यतिरिक्तः सर्वः । तेषां प्राप्तत्वादिति भावः । ननु प्रतिषेधपक्षेऽपि निषेध्यसमर्पणाय नकारग्रहणं कर्तव्यमेवेत्यत आह–प्रतिषेधे त्विति । उत्तरसूत्रस्थो नञत्रैव पठनीय इति

१ 'पर्यागतं परिक्लिशं' पा० । २ इदं व्याख्या भाष्यं लुप्तं स्यात् । ३ 'नूनं' पा० । ४ भाष्यवार्त्तिकमन्यस्य वा वार्त्तिकम् । ५ 'अनेकनिपाते' पा० । ६ 'अनर्थकं भवति' पा० ।

कर्तव्यं न कर्त्तव्यं प्रकृतमनुवर्तते, क प्रकृतं, रदाभ्यां निष्ठातो नः पूर्वस्य च द इति, तद्वा अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितु"मिति ॥ संब-न्धमनुवर्तिष्यते । अथ वा क्रियते न्यास एव द्विनकारको निर्देशः । 'नुद-विदोन्दत्राघ्राह्रीभ्योन्यतरस्यां व्याख्यापृमूर्च्छिमदा'मिति ॥ अथ वा पुनरस्तु प्रतिषेधः ॥न नु चोक्तं 'ह्रीग्रहणमनर्थकं नह्येतस्माद्विधिरस्ती'ति ॥ नानर्थकम्। एतदेव ज्ञापयत्याचार्यो 'भवत्येतस्माद्विधि'रिति यदयं ह्रीग्रहणं करोति ॥

## विक्तो भोगप्रत्यययोः ।८।२।५८।

बहव इमे विदयः पठ्यन्ते तत्र न ज्ञायते कस्य नित्यं नत्वं कस्य विभाषा कस्य प्रतिषेधः कस्य इडिति ?॥ अत उत्तरं पठति—॥ * ॥ यस्य विदेः श्नशकौ 'त'परत्वे तनवचने तद्‌वा-प्रतिषेधौ ॥ * ॥ श्नविकरणस्य विभाषा, शविकरणस्य प्रतिषेधः ॥ * ॥ श्यन्विकरणाश्नविधिश्छिदितुल्यः ॥*॥ श्यन्विकरणाद्विदेर्नविधिश्छिदिना तुल्यः ॥*॥ लुग्विकरणो वलि पर्यवपन्नः ॥*॥ लुग्विकरणो विदिर्वलादौ पर्यवपन्नः ॥ एष एवार्थः—

प्र.] भवतीत्यन्तरेणापि नकारग्रहणं सिध्यति । प्राकरणिकस्य प्रतिषेधविज्ञानादति-प्रसङ्गाऽभावः । द्विनकार(क) इति । 'वा पदान्तस्ये'ति परसवर्णाऽभावपक्षे एको नकार आदेशो द्वितीयो नञः सम्बन्धी । परसवर्णपक्षे तु 'हलो यमां यमि लोप' इति मध्यमनकारलोपः । एतदेवेति । न ह्यप्रसक्तस्य प्रतिषेधः सम्भवति । [ नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ] ।

विक्तो भोगप्रत्यययोः । यस्य विदेरिति । 'नुदविदे'त्यत्रोन्दिना रौधा-दिकेन साहचर्याद्विद विचारण इत्यस्मान्नत्वविकल्पः । यद्यपि नुदिना तौदादि-केन साहचर्यं तथापि शब्दपरविप्रतिषेधादुन्दिरत्र व्यवस्थाहेतुर्न तु नुदिः ।

उ.] तात्पर्यम् । नन्वेवं क्तादयोऽपि न स्युरत आह—प्राकरणिकस्येति । ननु परसवर्णेन त्रयो नकारा इति 'द्विनकारक'इत्ययुक्तमत आह—वा पदान्तस्येति । नन्वतदभावपक्षेऽपि मध्यमनस्य 'नलोप' इति लोपो दुर्वारः, सौत्रत्वान्नेति भावः । [ नुदविदोन्द ] ॥

विक्तो भो । श्लोके-यस्य विदेरिति सामान्येन विदिद्वयनिर्देशः । श्नशकाविति । कप्र-त्ययःस्वार्थिकः । ययोर्विदोः श्नशौ विहितौ तद्‌ तयोस्तशब्दपरत्वे नशब्दसंबन्धिनत्वविधि-विषये यथाक्रमं विकल्पप्रतिषेधावित्यर्थः । छिदितुल्य इति । यथा छिदेश्छिन्न इत्यत्र नित्यं

१ इदं क्वचिन्न । २ 'तरस्यान्नध्याख्या' पा० । ३ 'तन्न' पा० । ४ श्लोकवार्त्तिकमेतत् । ५ 'श्नमुशकौ' पा० । ६ 'कपरत्वे' पा० । ७ 'श्नन्विक' पा० ।

'[1]ययोर्विद्योः [2]श्नशा[3]वुक्तौ तयोर्नत्वस्य वा[4]नतौ ।
ययोस्तु इयँल्लुकौ ताभ्यां छिदिर्वे[5]च्चेद्दिष्यते ॥

अपर आह—

॥ ❀ ॥ वेत्ते[7]स्तु[6] विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
वि[8]न्त्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दतेः ॥ ❀ ॥

**भित्तं शकलम् ।८।२।५९।**

'भित्तं शकल'मित्युच्यते तत्रेदं न सिध्यति—भित्तं भिन्नमिति ॥

---

प्र.]'विद्लृ लाभे' इत्यस्मात्तु भोगप्रत्यययोर्नत्वनिषेधोऽन्यत्र नत्वम् । 'विद सत्ताया'मित्यस्मात्तु नत्वम् । 'विद ज्ञाने' इत्यस्मात्त्विटा व्यवधानान्नत्वाऽभावः । तौदादिकात्तु 'विभाषा गमहने'ति क्सौ विकल्पविधानाद्यस्य विभाषेति निष्ठायामिट्प्रतिषेधः । **तनवचन इति** । तस्य नस्तनः, तस्य वचनमिति समासः । **तदु इति** । 'त'दिति लुप्तषष्ठीकम् । 'उ' इत्यनर्थको निपातः पादपूरणार्थः । **विन्तेरिति** । विन्त इति तिङन्तानुकरणात्षष्ठी । [ **वित्तो भोगप्रत्यययोः** ] । **भित्तं । भिन्नमिति** । शकलवाचिना भित्तशब्देन सामानाधिकरण्या-

---

उ.] नत्वं तथा विद्यतेरित्यर्थः । **पर्यवपन्न इति** । इटि सति रूपान्तरं प्राप्त इत्यर्थः । यद्यपि प्रत्ययस्येट् तथापि प्रयोगे धातोरनन्तरं श्रूयमाणत्वात्तदवयवत्वप्रतिभानाद्विदिः पर्यवपन्न इत्युक्तं, तत्र बीजान्याह—**नुदेति** । **शब्दपरविप्रतिषेधादिति** । यद्यपि विप्रतिषेधसूत्रे कार्यशब्देन शास्त्रीयं ग्रहीतुमुचितं, तथापि विरोधे परस्य बलवत्त्वदर्शनादत्रापि तथैव कल्पनं । यद्यप्यचः परस्मिन्निति सूत्रस्थभाष्यरीत्या पूर्वसाहचर्यमन्तरङ्गं तथापि व्याख्यानादेव निर्णयो बोध्यः । एवं 'विभाषागमहनविदविशा'मिति सूत्रेपि बोध्यम् । **विद्लृलाभ इति** । अस्यैव भोगप्रत्यययोर्वृत्तिसंभवादिति भावः । सत्ताविचारणयोर्हि तदसंभव इति तात्पर्यम् । क्वचित्तु 'विदिर्लाभ'इति कैयटे पाठः । श्यनित्यादि भाष्यं व्याचष्टे—**विद सेति** । ननु तौदादिकस्याऽनिट्कारिकासु पाठाऽभावात्तस्य कुतो नेडित्यत आह-**तौदादिकात्त्विति**। तत्र हि व्याख्यानात्तौदादिकस्यैव ग्रहणं नतु ज्ञानार्थलुग्विकरणस्येत्यर्थः । भाष्ये **चानन्ताविति** । विकल्पप्रतिषेधावित्यर्थः । ननु रौधादिकस्य श्तिपा निर्देशे विनत्तेरिति भवितव्यं कथं विन्तेरित्युक्तिरत आह—**तिङन्तेति** । तेन तदर्थो धातुर्लक्ष्यत इति भावः । भाष्ये—**वित्तो भोगेष्विति** । भोगग्रहणं प्रत्ययस्याऽप्युपलक्षणं । [**वित्तो भोगप्रत्यय**] [**भित्तं श**] । पक्षान्तरेऽपि समाधिमाह—**विशेषोपक्रमेऽपीति** । क्रियाप्रवृत्तिनिमि-

---

१ श्लोकवार्त्तिकम् । २ 'ययोर्विदोः श्नशप्लुकौ' । ३ 'दुक्तौ'पा० । ४ 'नतौ'पा० । ५ 'चेट्त्वमि'। चेट् च इ' पा० । ६ 'वित्तेस्तु' पा० । ७ 'वेत्ते' पा० । ८ 'भोगे वित्तश्च विन्दतेः' इति पा० ।

कर्तव्यं न कर्त्तव्यं प्रकृतमनुवर्तते, क्व प्रकृतं, रदाभ्यां निष्ठातो नः पूर्वस्य च द इति, तद्वा अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितु''मिति ॥ संबन्धमनुवर्तिष्यते । अथ वा क्रियते न्यास एव द्विनकारको निर्देशः । 'नुदविदोन्दत्राघ्राह्रीभ्योन्यतरस्यां[३] घ्याख्याप मूर्च्छिमदा'मिति ॥ अथ वा पुनरस्तु प्रतिषेधः ॥न तु चोक्तं 'ह्रीग्रहणमनर्थकं न[६]ह्येतस्माद्विधिरस्ती'ति ॥ नानर्थकम्। एतदेव ज्ञापयत्याचार्यो 'भवत्येतस्माद्विधि'रिति यदयं ह्रीग्रहणं करोति ॥

## वित्तो भोगप्रत्यययोः ।८।२।५८।

बहव इमे विदयः पठ्यन्ते तत्र[३] न ज्ञायते कस्य नित्यं नत्वं कस्य विभाषा कस्य प्रतिषेधः कस्य इडिति ? ॥ अत उत्तरं पठति—॥ ❀ ॥ यस्य[४] विदेः श्न[५]शकौ 'त'[६]परत्वे तनवचने तद्वु वा-प्रतिषेधौ ॥ ❀ ॥ श्न[७]विकरणस्य विभाषा, शविकरणस्य प्रतिषेधः ॥ ❀ ॥ श्यन्विकरणान्नविधिश्छिदितुल्यः ॥❀॥ श्यन्विकरणाद्विदेर्नविधिश्छिदिना तुल्यः ॥❀॥ लुग्विकरणो वलि पर्यवपन्नः ॥❀॥ लुग्विकरणो विदिर्वलादौ पर्यवपन्नः ॥ एष एवार्थः—

---

प्र.] भवतीत्यन्तरेणापि नकारग्रहणं सिध्यति । प्राकरणिकस्य प्रतिषेधविज्ञानादतिप्रसङ्गाऽभावः । द्विनकार(क) इति । 'वा पदान्तस्ये'ति परसवर्णाऽभावपक्षे एको नकार आदेशो द्वितीयो नञः सम्बन्धी । परसवर्णपक्षे तु 'हलो यमां यमि लोप' इति मध्यमनकारलोपः । एतदेवेति । न ह्यप्रसक्तस्य प्रतिषेधः सम्भवति । [ नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ] ।

वित्तो भोगप्रत्यययोः । यस्य विदेरिति । 'नुदविदे'त्यत्रोन्दिना रौधादिकेन साहचर्याद्विद विचारण इत्यस्मान्नत्वविकल्पः । यद्यपि नुदिना तौदादिकेन साहचर्यं तथापि शब्दपरविप्रतिषेधादुन्दिरत्र व्यवस्थाहेतुर्न तु नुदिः ।

---

उ.] तात्पर्यम् । नन्वेवं क्तादयोऽपि न स्युरत आह—प्राकरणिकस्येति । ननु परसवर्णेन त्रयो नकारा इति 'द्विनकारक'इत्ययुक्तमत आह—वा पदान्तस्येति । नन्वतदभावपक्षेऽपि मध्यमनस्य 'नलोप' इति लोपो दुर्वारः, सौत्रत्वान्नेति भावः । [ नुदविदोन्द ] ॥

वित्तो भो । श्लोके-यस्य विदेरिति सामान्येन विदिद्वयनिर्देशः। श्नशकाविति । कप्रत्ययःस्वार्थिकः । ययोर्विदोः श्नशौ विहितौ तद्वु तयोस्तशब्दपरत्वे नशब्दसंबन्धिनत्वविधिविषये यथाक्रमं विकल्पप्रतिषेधावित्यर्थः। छिदितुल्य इति । यथा छिदेश्छिन्न इत्यत्र नित्यं

---

१ इदं क्वचिन्न । २ 'तरस्यान्नध्याख्या' पा० । ३ 'तन्न' पा० । ४ श्लोकवार्त्तिकमेतत् । ५ 'श्नम्शकौ' पा० । ६ 'क्तपरत्वे' पा० । ७ 'श्नम्विक' पा० ।

'येयोर्विद्योः श्नशाव्लुकौ तयोर्नत्वस्य वार्नत्वौ ।
ययोस्तु श्यॅल्लुकौ ताभ्यां छिदिवेच्चेद्विदिष्यते ॥

अपर आह—

॥ * ॥ वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दतेः ॥ * ॥

**भित्तं शकलम् ।८।२।५९।**

'भित्तं शकल'मित्युच्यते तत्रेदं न सिध्यति—भित्तं भिन्नमिति ॥

---

प्र.]'विद्लृ लाभे' इत्यस्मात्तु भोगप्रत्यययोर्नत्वनिषेधोऽन्यत्र नत्वम् । 'विद सत्ताया'मित्यस्मात्तु नत्वम् । 'विद ज्ञाने' इत्यस्मात्त्विटा व्यवधानान्नत्वाऽभावः । तौदादिकात्तु 'विभाषा गमहने'ति क्वसौ विकल्पविधानाद्यस्य विभाषेति निष्ठायामिट्प्रतिषेधः । तनवचन इति । तस्य नस्तनः, तस्य वचनमिति समासः । त्तदु इति । 'त'दिति लुप्तषष्ठीकम् । 'उ' इत्यनर्थको निपातः पादपूरणार्थः । विन्तेरिति । विन्त इति तिङन्तानुकरणात्षष्ठी । [ वित्तो भोगप्रत्यययोः ] । भित्तं । भिन्नमिति । शकलवाचिना भित्तशब्देन सामानाधिकरण्या-

---

उ.] नत्वं तथा विद्यतेरित्यर्थः । पर्यवपन्न इति । इटि सति रूपान्तरं प्राप्त इत्यर्थः । यद्यपि प्रत्ययस्येट् तथापि प्रयोगे धातोरनन्तरं श्रूयमाणत्वात्तदवयवत्वप्रतिभानाद्विदिः पर्यवपन्न इत्युक्तं, तत्र बीजान्याह—नुदेति । शब्दपरविप्रतिषेधादिति । यद्यपि विप्रतिषेधसूत्रे कार्यशब्देन शास्त्रीयं ग्रहीतुमुचितं, तथापि विरोधे परस्य बलवत्त्वदर्शनादत्रापि तथैव कल्पनं । यद्यप्यचः परस्मिन्निति सूत्रस्थभाष्यरीत्या पूर्वसाहचर्यमन्तरङ्गं तथापि व्याख्यानादेव निर्णयो बोध्यः । एवं 'विभाषागमहनविदविशा'मिति सूत्रेपि बोध्यम् । विद्लृलाभ इति । अस्यैव भोगप्रत्यययोर्वृत्तिसंभवादिति भावः । सत्ताविचारणयोर्हि तदसंभव इति तात्पर्यम् । क्वचित्तु 'विदिर्लाभ'इति कैयटे पाठः । श्यनित्यादि भाष्यं व्याचष्टे—विद सेति । ननु तौदादिकस्याऽनिट्कारिकासु पाठाऽभावात्तस्य कुतो नेडिस्यत आह-तौदादिकात्त्विति । तत्र हि व्याख्यानात्तौदादिकस्यैव ग्रहणं नतु ज्ञानार्थलुग्विकरणस्येत्यर्थः । भाष्ये चानत्वाविति । विकल्पप्रतिषेधावित्यर्थः । ननु रौधादिकस्य श्तिपा निर्देशे विनत्तेरिति भवितव्यं कथं विन्तेरित्युक्तिरत आह—तिङन्तेति । तेन तदर्थो धातुर्लक्ष्यत इति भावः । भाष्ये—वित्तो भोगेष्विति । भोगग्रहणं प्रत्ययस्याऽप्युपलक्षणं । [वित्तो भोगप्रत्यय] भित्तं श । पक्षान्तरेऽपि समाधिमाह—विशेषोपक्रमेऽपीति । क्रियाप्रवृत्तिनिमि-

---

१ श्लोकवार्त्तिकम् । २'ययोर्विदोः श्नशब्लुकौ'। ३ 'दुक्तौ'पा०। ४ 'नतौ'पा०। ५'चेट्लमि'। चेट् च इ' पा०। ६ 'वित्तेस्तु' पा०। ७ 'वेत्ते' पा० । ८ 'भोगे वित्तश्च विन्दतेः' इति पा० ।

नैष दोषः-सर्वत्रैवाऽत्र भिदिर्विदारणसामान्ये वर्तते, तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः,-भिन्नं ॥ किं ?[1] ॥ भित्तमिति ।

॥ ॥ तत्वमभिधायकं[2] चेच्छकलस्याऽनर्थकः प्रयोगः स्यात् ॥

शकलेन चाप्यभिहिते न[3] भवति तत्वं निगमयामः ॥ ॥

## क्विन्प्रत्ययस्य कुः ।८।२।६२।

प्रत्ययग्रहणं किमर्थं न 'क्विनः कु'रित्येवोच्येत ?॥ 'क्विनः कु'रितीयत्युच्यमाने वकारस्यैव तु कुत्वं प्रसज्येत ॥ ननु च लोपे कृते न भविष्यति ॥

---

प्र.] छिन्नशब्दस्याऽपि शकलार्थवृत्तित्वान्नत्वाऽप्रसङ्गः। ततश्च भित्तं भित्तमित्येव[4] स्यान्न तु भित्तं भिन्नमिति चोद्यम् । सर्वत्रेति । शकले पटादौ च । विदारणसामान्य इति । ततश्च सामान्यार्थे पदे संस्क्रियमाणे शब्दान्तरप्रयोगसमधिगम्यः शकलाऽर्थो बहिरङ्गत्वान्नत्वाऽभावस्याऽनिमित्तम् । तत्रावश्यमिति । सामान्योपक्रमे विशेषाऽभिधानमिति भावः । विशेषोपक्रमेऽप्यभिधाने भित्तशब्दः शकले रूढ इति भिदिक्रिया केवलं व्युत्पत्तिनिमित्तं न तु प्रवृत्तिनिमित्तम् । अथवा यया विदारणक्रियया शकलं निर्वर्तते तामेव भित्तशब्दोऽन्तर्भावयति, या तु निष्पन्नस्य शकलस्याऽन्या विदारणक्रिया तत्प्रतिपादनायाऽनेकक्रियासम्बन्धसम्भवे क्रियान्तरव्यवच्छेदाय भिन्नशब्दस्याऽप्यविरुद्धःप्रयोगः। तत्त्वमिति। भित्तशब्दशकलशब्दयोः पर्यायत्वाद्युगपदप्रयोग इत्यर्थः। [भित्तं] ।

क्विन् । प्रत्ययग्रहणमिति । क्विनः प्रत्ययत्वाऽव्यभिचारात्प्रश्नः । वकारस्यैवेति । प्रत्ययग्रहणे यस्मात्स तदादेस्तदन्तस्ये'ति वचनाल्लोपापवादो वकारस्यैव कुत्वं

---

उ.] त्तत्वेऽप्याह-अथवेति । क्रियान्तरव्यवच्छेदायेति । भिन्नमेव भित्तं, नत्वमतिष्ठत इत्यादौत्यर्थः । 'भित्तमिति निपात्यते शकलं तत्वेन रूढ्या उच्यते चे'दिति सूत्रार्थः । भाष्ये-तत्त्वमिति । तत्वशब्देन तद्युक्तो भित्तशब्दो लक्ष्यते। यदि भित्तशब्दः प्रयुज्यते तदा शकलशब्दस्य न प्रयोगः । पर्याययोः सह प्रयोगाऽभावात् । एवं शकलशब्दप्रयोगे भित्तशब्दस्य न प्रयोग इति तत्त्वभूतं वस्तु निगमयामः-स्थिरीकुर्मः । स्थिरीकरणं हि निगमनं, यथा पञ्चावयवेऽनुमानप्रयोगे 'तस्मादग्निमान् पर्वत' इति । तस्माद्रूढोऽयमिति भावः । तत्फलितमाह-भित्तशब्देति ।

क्विन्प्रत्ययस्य । प्रत्ययग्रहण इति । प्रत्ययपदसत्त्वे तु बहुव्रीहिणा पूर्वस्यैवेति न दोष इति भावः । लोपाऽपवाद इति । 'वेरपृक्तस्ये'ति लोपे प्राप्ते कुत्वारम्भादिति भावः ।

---

१ इदं क्वचिन्न । २ 'यक्रमिति'पा०। ३ 'स्यानुप्रयोगता नास्ति'पा०। ४ 'भिन्नं भित्त' पा० ।

अनवकाशं कुत्वं लोपं बाधेत[1] ॥ सावकाशं कुत्वम् ॥ कोऽवकाशः ? ॥ अनन्त्यः ॥ कथं पुनः सत्यन्त्येऽ[2]नन्त्यस्य कुत्वं स्यात् ?॥ आचार्यप्रवृत्तिर्ज्ञापयति 'नान्त्यस्य कुत्वं भवती'ति यदयं 'क्विनः कु'रिति कवर्गनिर्देशं करोति, इतरथा हि तद्गुणमेवाऽयं निर्दिशेत् ॥ इदं तर्हि प्रयोजनं—येभ्यः क्विन्प्रत्ययो विधीयते तेषामन्यप्रत्ययान्तानामपि पदान्ते[3] कुत्वं यथा स्यात् ,—मानो अस्राक्। मानो अद्राक् ॥

क्विनः कुरिति वक्तव्ये[4] प्रत्ययग्रहणं कृतम् ।
क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते ॥ १ ॥

---

प्र.] स्यात्। लोपे कृत इति। अन्तरङ्गो लोपः, कुत्वं तु बहिरङ्गं, पदस्येति विधानात् । अनवकाशमिति । क्विवादिषु सावकाशं लोपं विशेषविहितं कुत्वं बाधेतेति भावः । अनन्त्य इति । क्विन्प्रत्ययापेक्षयाऽनन्त्यः, पदस्य त्वन्त्य इति ज्ञेयम् । 'पदस्ये'ति हि स्थानषष्ठ्या अन्त्येऽल्युपसंहारादन्त्यस्यैव कुत्वेन भाव्यं, यदि तु पदस्येत्यवयवषष्ठी स्यात्तदा घृतस्पृशेत्यादावपि कुत्वं स्यात् । कथं पुनरिति । 'सत्यपि सम्भवे बाधनं भवती'ति लोपं बाधित्वा कुत्वेन भाव्यमिति भावः । यदयमिति । अनेकस्य स्थानिनोऽनेकादेशप्रतिपत्तये वर्गग्रहणं, वकारस्यैव तु स्थानित्वे घकार एव निर्दिश्येत । 'वर्गाणां तृतीयचतुर्थौ' इति शिक्षायां वकारघकारयोर्गुणसाम्यप्रतिपादनात् । इदं तर्हीति । क्विन्प्रत्ययस्तत्प्रकृतिधातूपलक्षणमिति तस्मिन्सत्यसति वा तत्प्रकृतेर्धातोः पदस्य कुत्वं भवति। अस्रागिति । सृजिदृशिभ्यां माङि लुङ् । तिप् । सिच् । 'बहुलं छन्दसी'ति विधानादीण्न भवति । हल्ङ्यादिलोपः । 'सृजिदृशोर्झल्यमकिती'त्यमागमः । 'वदव्रजे'ति वृद्धिः । 'बहुलं छन्दस्यमाङ्योगेऽपी'त्यडागमः । 'संयोगान्तस्य लोपः' । 'व्रश्चभ्रस्जे'ति षत्वे प्राप्ते कुत्वं जस्य गः, शस्य खः । 'वावसाने'

---

उ.] अन्तरङ्ग इति । प्रत्ययमात्रापेक्षत्वादिति भावः । त्रैपादिकतयाऽप्यसिद्धं कुत्वमिति बोध्यम् । ननु पदस्येत्यधिकारादलोन्त्यपरिभाषया पदान्तस्यैव कुत्वं स्यादिति कथमनन्त्योऽवकाशः स्यादत आह— क्विन्प्रत्ययेति । ननु पदस्येत्यस्य विशेषणताया अप्युक्तत्वेन कथं स्थानषष्ठी स्यादत आह—यदि त्विति । शिक्षायामिति । दन्त्योष्ठ्यवस्यापि महाप्राणता तत्रोक्तेत्याहुः । धातूपलक्षणमिति । अतद्गुणसंविज्ञानबहुव्रीहिणेत्यर्थः । जस्य ग इति । अस्रागित्यत्र। अद्रागित्यत्राह—शस्य ख इति । 'वर्गाणां प्रथमद्वितीया'

---

१ 'बाधते' पा० । २ 'सत्यन्ते' पा० । ३ इदं क्वचिन्न । ४ 'सिद्धे यत्' ।

## अहन् ।८।२।६८।

॥*॥ रुत्वविधावह्नो रूपरात्रिरथन्तरेषूपसङ्ख्यानम् ॥*॥ रुत्वविधावह्नो रूपरात्रिरथन्तरेषूपसङ्ख्यानं कर्तव्यम् । अहोरूपम् । अहोरात्रः । अहोरथन्तरं साम ॥ [ अहन् ] ॥

## रोऽसुपि ।८।२।६९।

॥ * ॥ असुपि रादेशे उपसर्जनसमासे प्रतिषेधोऽलुकि ॥ * ॥ असुपि रादेशे उपसर्जनसमासेऽलुकि प्रतिषेधो वक्तव्यः । दीर्घाह्ना निदाघ इति ।

---

प्र.]इति चर्त्वे ककारः । 'पूर्वत्रासिद्ध'मित्यसिद्धत्वं षत्वे कुत्वस्य नास्ति, प्रत्ययग्रहणसामर्थ्यात्षत्वाद्यपवादत्वात्कुत्वस्य । [ क्विन्प्रत्ययस्य कुः ] ॥

अहन् । रुत्वविधाविति । समासाऽसमासयोर्लुमता लोपाद्रादेशे प्राप्ते रुत्वमुत्वार्थमुच्यते । अहोरूपमिति । [अह्नो रूपमिति] षष्ठीसमासः । गतमह्नो रूपं पश्येत्यसमासः। अहोरात्र इति । इकारलोपे कृतेऽप्येकदेशविकृतस्यानन्यत्वाद्रुत्वम् । रात्रग्रहणं तु न कृतं, गतमह्नो रात्रिरागतेत्यत्रापि रुत्वार्थम् । [ अहन् ] ।

रोऽसुपि । 'असुपि रादेश' इति पर्युदासं मत्वेदमुच्यते–दीर्घाह्ना निदाघ इति । अत्र च सुप्सदृशो हल्परोऽस्तीति रादेशप्रसङ्गः, रुत्वं चाऽत्र यत्वार्थमि-

---

उ.] इत्यत्र शखयोर्गुणसाम्यप्रतिपादनादिति भावः । षत्वाद्यपवादत्वादिति । आदिना जश्त्वं । 'कुः क्विन्यत'इति न्यासेन 'दृष्ट' इत्यध्याहारेण च बहुव्रीह्यर्थलाभे सिद्धे प्रत्ययग्रहणस्यान्यपदार्थांशे वीप्सागर्भबहुव्रीहिलाभार्थत्वेन विशिष्य तादृशादिविषयकलक्षणोपप्लवेन तद्विषये जश्त्वषत्वयोरवश्यं प्राप्त्या तस्य तदपवादत्वमिति भावः । इदं चिन्त्यं, भाष्यकृता बहुव्रीहिमात्रमूलकताया एव प्रत्ययग्रहणस्योक्तत्वात् । तस्मादुष्णिगञ्युजिक्रुञ्चुषु कुत्वस्य चारितार्थ्येन न तदपवादत्वमिति । यत्तु क्विन्प्रकृतौ षत्वप्राप्तियोग्येऽपि कृते षत्वे कुत्वस्य चारितार्थ्यं, तस्मात्षत्वे जश्त्वे च कुत्वमिति बोध्यमिति, तन्न, तत्प्रवृत्तिकालेऽवश्यप्राप्तेरेवापवादत्वबीजत्वात् । एतदेवोच्यते 'सत्यपि संभवे' इत्यादि ।

अहन् । समासासमासयोरिति । न लोपः प्रातिपदिकेति सूत्रस्थभाष्यप्रामाण्येनास्य संबुद्धावप्रवृत्तिरिति बोध्यम् । लुमतेति । समासे–'सुपो धात्वि'ति । असमासे–'स्वमो'रिति । एकदेशविकृतस्येति । टचः प्राग्वर्तिभागस्येत्यर्थः । 'न लोप'इति सूत्रभाष्ये 'रात्रे'ति पाठो दृश्यते । अत्र चातिदेशिकमहोरात्र इत्येवोदाहृतमिति गतमह्नो रात्रिरित्यादेरनभिधानमित्यन्ये । [ अहन् ]॥

रोऽसुपि । पर्युदासपक्षे दोषान्तरमाह–पर्युदासेचेति । एवं च पश्चाद्ददातीति पदा-

---

१ 'रुविधा' । २ इदं क्वचिन्न । ३ 'अहोरात्रम्' पा० ।

॥ * ॥ सिद्धं तु सुपि प्रतिषेधात् ॥ * ॥ सिद्धमेतत् ॥ कथम् ? ॥ 'सुपि प्रतिषेधात्' । प्रसज्याऽयं प्रतिषेधः-'सुपि ने'ति ॥ इहाऽपि तर्हि न प्राप्नोति अहर्ददाति अहर्भुङ्क्त इति ॥ * ॥ लुकि चोक्तम् ॥ * ॥ [लुकि चोक्तम्[2]] ॥ किमुक्तम् ? ॥ 'अह्नो रविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवती[2]'ति ॥

## अम्नरूधरवरित्युभयथा छन्दसि ।८।२।७०।

॥*॥ छन्दसि[3] भाषायां[4] च प्रचेतसो राजन्युपसङ्ख्यानम् ॥*॥ छन्दसि भाषायां च प्रचेतसो राजन्युपसङ्ख्यानं कर्तव्यम् । प्रचेतो राजन् । प्रचेता राजन् ॥ * ॥ अहरादीनां पत्यादिषूपसङ्ख्यानम्[5] ॥ * ॥ अहरादीनां पत्यादिषूपसङ्ख्यानं कर्तव्यम् । अहर्पतिः । अहः पतिः । [ अह≍पतिः ] अहर्पुत्रः । अहः पुत्रः[6] । [ अह≍पुत्रः । ] गीर्पतिः । गीः पतिः । [ गी≍पतिः ] । धूर्पतिः । धूः पतिः । [ धू≍पतिः ] [ अम्नरूधरवरि ]

## वसुस्रंसुध्वंस्वनडुहां दः ।८।२।७२।

इह कस्मान्न भवति—पपिवान् तस्थिवानिति ? ॥ 'सस्ये'ति वर्तते ॥

---

प्र.] ष्यते। पर्युदासे चाऽहरित्यत्र रुत्वमेव भवति न तु रः । सिद्धं स्विति । प्रत्ययलक्षणेन दीर्घाहा निदाघ इत्यत्र सुप्परत्वाद्रत्वाँऽभावः । 'पूर्वत्रासिद्ध'मिति रुत्वस्याऽसिद्धत्वात्पूर्वं नोपधालक्षणो दीर्घः, पश्चाद्रुत्वम् । अहरित्यत्र तु र एव भवति । इहापीति । प्रत्ययलक्षणेन रप्रतिषेधप्रसङ्गः । [ रोऽसुपि ] ।

अम्नरूध । प्रचेता राजन्निति । सकारस्य रेफः, तस्य रो रीति लोपे ढ्रलोप इति दीर्घः । अहर्पतिरिति । रेफस्य रेफो विसर्जनीयबाधनाय पक्षे छन्दोभाषयोर्विधीयते । [ अम्नरूधरवरि ]

वसुस्रं । पपिवानिति । सस्येत्यस्याऽननुवृत्तौ नकारस्य दत्वं प्राप्नोति,

---

उ.] न्तरसन्निधाने उत्वं स्यादित्यर्थः। रुत्वस्यासिद्धत्वादिति । वस्तुस्थितिप्रदर्शनमेतत् । भाष्ये लुमता लुप्ते इति । प्रत्यये परतः पूर्वस्य कार्ये न लुमतेति निषेधादिति भावः ।

अम्नरू । रेफ इति । रुत्वे एव प्राप्ते इति भावः । रेफस्य रेफविधाने फलमाह—रेफस्येति । अहःपत्यादौ पक्षे उपध्मानीयः । [ अम्नरू ] ॥

वसुस्रंसुध्वंस्व । लोपं बाधित्वेति । संयोगान्तलोपमित्यर्थः । परत्वादिति भावः ।

---

१ इदं क्वचिल्लुप्तम् । २ 'न लुमता' ( १-१-६३ ) सूत्रे उक्तम् ॥ ३ इदं न सार्वत्रिकम् । ४ 'विभाषायां' पा० । ५ उपसङ्ख्यानमिति लुप्तम् । ६ 'अहःपुत्रः' । ७ 'राभावः' ।

एवमप्यत्र प्राप्नोति ॥ लोपे कृते न भविष्यति ॥ अनकाशं दत्वं लोपं बाधेत[1] ॥ सावकाशं दत्वम् ॥ कोऽवकाशः ? ॥ पपिवद्भ्यां पपिवद्भिरिति ॥ [नैषोऽस्त्यस्यावकाशः[2]]–अत्रापि रुः प्राप्नोति, तद्यथैव रुं बाधते एवं लोपमपि बाधेत ॥ न बाधते ॥ किं कारणम् ? ॥ येन नाऽप्राप्ते तस्य बाधनं भवति, न चाऽप्राप्ते रौ दत्वमारभ्यते, लोपे पुनः प्राप्ते चाऽप्राप्ते च ॥ यदि तर्हि 'सस्ये'ति वर्तते–अनडुद्भ्यामनडुद्भिरित्यत्र न प्राप्नोति ॥ वचनादनडुहि भविष्यति ॥ यद्येवम्–॥ * ॥ अनडुहो दत्वे नकारप्रतिषेधः ॥ * ॥ अनडुहो दत्वे नकारस्य प्रतिषेधो वक्तव्यः । अनड्वान् ॥ * ॥ सिद्धं तु प्रतिपदविधानान्नुमः ॥ * ॥ सिद्धमेतत् ॥ कथम् ? ॥ प्रतिपदविधानान्नुमः'[3] । नुमः प्रतिपदविधानसामर्थ्याद्दत्वं न भविष्यति[4] ॥ यदि तर्हि यद्यदनडुहः प्राप्तं तत्तन्नुमः प्रतिपदविधानसामर्थ्याद्बाध्यते रुत्वमपि न प्राप्नोति–अनड्वांस्तत्रेति ॥ नैष दोषः–'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते' । दत्वं च प्रति नुमः प्रतिपदविधिरनर्थको, रोः पुनर्निमित्तमेव ॥ [ वसुस्रंसुध्वंस्वनडुहां दः ] ॥

---

प्र.] तदनुवृत्तौ तु लोपं बाधित्वा सकारस्य दत्वं प्राप्नोति । लोपे कृत इति । 'पूर्वत्रासिद्ध'मिति दत्वस्याऽसिद्धत्वाल्लोपः । अनवकाशमिति । कार्यान्तरेण सर्वस्य विषयस्याक्रान्तत्वात् । येन नाप्राप्त इति । सर्वविषयव्यापि लक्षणं दत्वेन बाध्यते, न तु सर्वं कार्यं सर्वं वा लक्षणम् । यदि तर्हीति । एकसमासनिर्दिष्टानां वस्वादीनां सर्वेषां विशेषणसंबन्धस्य न्याय्यत्वात् । वचनादिति । एकस्माद्ग्रहणकवाक्यादनेकस्य प्रक्रियावाक्यस्योपप्लवात्संभवव्यभिचाराभ्यां च विशेषणसंबन्धादनडुहोऽसंभवात्सस्येति विशेषणेनाऽयोगः । सिद्धं त्विति । यदि नकारस्य दत्वं स्यान्नुमोऽनर्थकः स्याद्विधिरिति हकारस्यैव दत्वं विधीयते । यदि तर्हीति । विधानसामर्थ्यात्सर्वत्राऽविकृतेन नुमा भवितव्यमिति भावः ।

---

उ.] असिद्धत्वमाच्छादयेदं । ननु परत्वादल्लोपं बाधित्वा दत्वं स्यादत आह–पूर्वत्रेति । कार्यान्तरेणेति । क्वचिद्रुत्वेन, क्वचिल्लोपेन । तत्राऽविशेषादुभयोरपि बाधः स्यादिति भावः । अनडुहोः संभवादिति । यद्यपि स्रंसुध्वंसोर्विज्नास्त्यनभिधानात् , अत एवानुवृत्तौ पपिवानित्यत्रैव भगवता दोषः शङ्कितः, एवञ्च तयोरपि विशेषणं व्यर्थमव्यभिचारात्तथापि उपरञ्जकतया तद्विशेषणत्वेऽपि न दोष इत्यभिप्रायः । [ वसुस्रंसुध्वंसु ]

---

१ 'बाधते'पा० । २ इदं क्वचिन्न । ३ 'नुमः प्रतिपदविधानात्'पा० । ४ 'प्राप्नोति' । ५ 'रुरपि'पा०

## उपधायां च ।८।२।७८।

क्रिमर्थमिदमुच्यते न 'हलि'त्येव सिद्धम् ? ॥ न सिध्यति । 'धातो'-रिति [तत्र[1]] वर्तते' तत्र[2] रेफवकाराभ्यां धातुर्विशेष्यते–रेफवकारान्तस्य धातो'-रिति ॥ किं पुनः कारणं पूर्वस्मिन् योगे रेफवकाराभ्यां धातुर्विशेष्यते [ न पुनः[1] पदं विशेष्यते ? ] । नैवं[3] शक्यम् ॥ इहापि प्रसज्येत[3]–अग्निर्वायुरिति ॥ एवं तर्हि पूर्वस्मिन्योगे यद्धातुग्रहणं तदुत्तरत्र निवृत्तम् ॥ एवमपि 'कुर्कुरः' मुर्मुर'इत्यत्रापि प्राप्नोति ॥ एवं तर्ह्यनुवर्तते तत्र धातुग्रहणं, न तु रेफवकाराभ्यां धातुर्विशेष्यते ॥ किं तर्हि ? ॥ इग्विशेष्यते–'रेफवकारान्तस्येको धातो'रिति ॥ एवमपि कुर्कुरीयति मुर्मुरीयतीत्यत्रापि प्राप्नोति ॥ तस्माद्धातुरेव विशेष्यः । धातौ च विशेष्यमाणे उपधायां चेति वक्तव्यम् ।

॥ * ॥ उपधादीर्घत्वेऽभ्याससजिव्रिचतुर्णां प्रतिषेधः ॥ * ॥ उपधादीर्घत्वेऽभ्याससजिव्रिचतुर्णां प्रतिषेधो वक्तव्यः । अभ्यासे–रियंतुः रियुः । संव्रिव्यतुः

---

प्र.] उपधायां च । पूर्वस्मिन्निति । 'र्वोरुपधाया' इत्यत्रेत्यर्थः । उत्तरत्रेति । 'हलि चे'त्यत्र । कुर्कुर इति । पदावयवस्य रेफस्य उपधाया इको दीर्घो विधीयमानोऽत्रापि प्राप्नोति । धात्वधिकारे तु रेफवकारान्तस्याऽधातुत्वान्न भवति । रेफवकारान्तस्येकइति । अन्तशब्दः समीपवाची, रेफवकारयोर्हल्परयोर्य उपधेक् तस्य धात्ववयवस्य दीर्घो विधीयमानो 'मूर्च्छिते'त्यादौ भविष्यति न तु 'कुर्कुर' इत्यादावित्यर्थः । कुर्कुरीयतीति । क्यजन्तस्य धातोरवयव इगिति दीर्घप्रसङ्गः । तस्मादिति । रेफवकारान्तस्य धातोर्हल्परस्योपधाया इको दीर्घो विधीयमानो 'मूर्च्छिते'त्यादौ न प्राप्नोतीति वचनम् । तेन धातोरुपधे यौ रेफवकारौ तयोरुपधाया इको दीर्घः । उपधादीर्घत्व इति । 'जिव्रि'शब्दो 'जीर्यतेः

---

उ.] उपधायां च । भाष्ये–हलीत्येवेति । 'गीर्ण'मित्यादिसिद्धये पदावयवरेफान्तस्योपधाया दीर्घ इत्यर्थं मन्यते । पूर्वस्मिन्नित्यस्य हलिचेत्यत्रेत्यर्थेऽग्निरिति उदाहरणाऽसङ्गतिरत आह–र्वोरिति । अत्र धातुग्रहणानुवृत्तौ उत्तरत्राप्यनुवृत्तिः संभाव्येत नान्यथेत्याशयेन प्रश्न इत्यर्थः । नन्विको रेफाद्यवयवत्वमनुपपन्नं, विशेष्याऽसन्निधानात्तदन्तविधेर्दुर्लभत्वं चात आह–अन्तशब्द इति । तेन धातोरित्युपधाग्रहणं र्वोर्विशेषणं । षष्ठीद्विर्वचनस्य स्थाने सप्तम्येकवचनं । धातोरित्यनुवर्तमानं वैयधिकरण्येन र्वोर्विशेषणं । प्रकृतमुपधाग्रहणमिको विशेषणं । तच्च र्वपेक्षं पूर्वत्वमाचष्टे इति भावः । धातोरुपधारेफ इति । बहिरङ्गत्वेऽनाद्धो

---

१ इदं क्वचिन्न । २ 'तत्रापि' पा० । ३ 'नैवं शक्य'मित्यादेः स्थाने 'इह माभूत्' पा०।

संविव्युः । [अभ्यासे] ।। जिघ्रिः । चतुर्यिता चतुर्यितुम् ॥ ❀ ।। उणादिप्रतिषेधश्च ॥ ❀ ॥ उणादीनां च प्रतिषेधो वक्तव्यः । कियोंः गियोंरिति ।। अभ्यासप्रतिषेधस्तावन्न वक्तव्यः । 'हलि'त्युच्यते न चात्र हलादिं पश्यामः ॥ यणादेशे कृते प्राप्नोति ॥ स्थानिवद्भावान्न भविष्यति ॥ प्रतिषिध्यतेऽत्र स्थानिवद्भावो 'दीर्घविधिं प्रति न स्थानिव'दिति ॥ नैपोऽस्ति प्रतिषेधः । उक्तमेतत्-'प्रतिषेधे स्वरदीर्घयलोपेषु लोपाऽजादेश'इति ॥ जिघ्रिप्रतिषेधश्च न वक्तव्यः । 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' ॥ चतुर्यिता चतुर्यितुमिति-'सुपि ने'ति वर्तते ॥ यद्येवं गीर्भ्यां गीर्भिरित्यप्रसिद्धिः ॥ न सुपो विभक्तिविपरिणामाद्गीर्भ्यां गीर्भिरित्यदोषः ॥ 'उणादिप्रतिषेधो वक्तव्य' इति,-परिहृतमेतत्,-'उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति ॥ [उपधायां च] ।

## अदसोसेर्दादु दो मः ।८।२।८०।

॥ ❀ ॥ अदसोऽनोस्रेः ॥ ❀ ॥ अदसोऽनोस्रेरिति वक्तव्यम् ॥ किमिदमनोऽस्रेरिति ? ॥ अनोकारस्य, असकारस्य, अरेफस्येति । अनोकारस्य-अदोऽत्र ॥ असकारस्य-अदस्यति । अरेफस्य-अदः ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् । क्रियते न्यास एव । अविभक्तिको निर्देशः-'अदस्-ओ असे'-रिति । ओकारात्परः प्रतिषेधः पूर्वभूतः । ततः सकारः । ततो रेफ इति ॥

---

प्र.] क्विन् रश्च व' इति व्युत्पन्नः । तत्रोणादिप्रतिषेधश्चेति सिद्धे प्रपञ्चार्थः पाठः। चतुर्यितेति। चतुर इच्छतीति क्यच् । तृच् । इट् । अतो लोपे कृते धातोरुपधारेफ इति दीर्घत्वप्रसङ्गः । स्वरेति । 'पूर्वत्राऽसिद्धे न स्थानिव'दिति स्थानिवत्त्वनिषेधाद्दीर्घः प्राप्नोति, तस्मादभ्यासप्रतिषेधो वक्तव्य एवेत्याहुः । न सुप इति। सुपः परो यो हल् तत्परयोर्वोर्दीर्घो न भवतीत्यर्थः । [उपधायां च]।

---

उ.]पस्याऽसिद्धत्वं तु न,त्रैपादिकेऽन्तरङ्गे तदप्रवृत्तेः । इत्याहुरिति । 'पूर्वत्रासिद्धे ने'त्यस्यापि स नियम इति तु भाष्याशय इत्यत्राऽरुचिः । भाष्ये-सुपिनेति वर्तत इति । आधारत्वविवक्षया सप्तमी । सुबन्तावयवस्यैको नेत्यर्थ इति भावः । एतेन चतुर्यितेत्यादौ अन्तर्वर्तिसुपो लुका लुप्तत्वेन विशिष्टोत्तरं सुपो व्यवहिततत्वेन च दोष इत्यपास्तम् । सुपः पर इति । सप्तम्यन्तस्य पञ्चम्या विपरिणाम इति भावः । [ उपधायां च ]॥

अदसोऽसेः । वार्तिके-अनोस्रेरिति बहुव्रीहिः । इकार उच्चारणार्थः । अविद्यमानोकार-

---

१ इदं क्वचिन्न । २ 'उणादीनां' । ३ 'भवति' पा० । ४ 'विभक्तिपरि' पा० । ५ 'अरेफकस्य' पा० । ६ 'अदस् ओ'इति पा० । ७ 'तस्योणा' । ८ 'प्रपञ्चार्थं' पा० ।

अथ वा नैवं विज्ञायते—'अदसोऽसकारस्ये'ति ॥ कथं तर्हि ?॥ अकारोऽस्य[1] सकारस्ये[2] सोऽयमसिः, असेरिति ॥ यद्येवममुमुयङ्ङिति न सिध्यति, अदम्रयङ्ङिति प्राप्नोति ॥ अदमुयङ्ङिति भवितव्यम् 'अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवती'ति ॥

॥ * ॥ अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥ * ॥

॥ * ॥ तत्र पदाधिकारादपदान्तस्या[3]ऽप्राप्तिः ॥ * ॥ तत्र पदाधिकारादपदान्तस्य न प्राप्नोति—अमुया अमुयोरिति ॥ * ॥ सिद्धन्तु सकार[4]प्रतिषेधात् ॥ * ॥ सिद्धमेतत् ॥ कथम् ? ॥ 'सकारप्रतिषेधात्' । यदयमसेरिति[5] प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्योऽपदान्तस्यापि भवतीति ॥

---

प्र.] अदसोऽसे । ओकारात्पर इति । सूत्रे तावत्पदानि निर्दिष्टान्युत्तरकालं तु यथेष्टमभिसंबन्धे लक्ष्यसंस्कारकवाक्यमुपप्लवमानमभिमतमर्थं संपादयति ।-असेरिति । यत्र सकारस्य त्यदाद्यत्वं क्रियते तत्र मुत्वं नान्यत्रेत्यर्थः । यद्येवमिति । त्यदाद्यत्वाऽभावान्मुत्वाऽप्रसङ्गः । अदमुयङ्ङिति । अःसेर्यस्येत्येवमनाश्रयणेऽपि नैवाऽमुमुयङ्ङिति भाव्यमित्यर्थः । अदसोऽद्रेरिति । ये—न सिः असिरिति सकारान्तप्रतिषेधमाश्रयन्ति नाऽन्त्यसदेशपरिभाषां, तेऽमुमुयङ्ङितीच्छन्ति । यथा 'चलीक्लृप्यत'इति रेफद्वयस्य लत्वम् । अन्त्यसदेशपरिभाषाश्रये त्वदमुयङ्ङिति ये तु त्यदाद्यत्वविषये एव मुत्वमिच्छन्ति ते 'अदद्रय'ङ्ङिति मन्यन्ते । असेर्हीति । अः सेर्यस्य सोऽसिस्तस्येत्यर्थः । यदयमिति । 'अदस्यती'त्यत्र 'नः क्ये'इति नियमाददसोऽपदत्वान्मुत्वं न भविष्यतीति किं निषेधेन ?। निषेधात्त्वपदस्याऽप्यदसो मुत्वं भवति—अमुयेति, पदस्याऽपि—अमुष्य अमूभ्यामिति । अन्त्य-

---

उ.] सकाररेफस्याऽदस इत्यर्थः । 'अद'इति विसर्गस्याऽसिद्धत्वाद्रेफान्त । भाष्ये—ओकारात्परः प्रतिषेधः पूर्वंभूत इति । भूतपूर्वः—पूर्वरूपं प्राप्त इत्यर्थः । 'ओ'इति लुप्तषष्ठीकं । 'सेर्'इति रेफान्तं । तथैव इकार उच्चारणार्थ इति बोध्यम् । 'असे'रित्यसमर्थसमासः । ओकारसकाररेफान्तस्याऽदसो न मुत्वमित्यर्थः । तदाह—सूत्रे इति । अत एवादोऽनुपदेश इति निर्देशः सङ्गच्छते । अकारोऽस्येति भाष्येण व्यधिकरणबहुव्रीहिरित्युक्तं । तदाह—यत्रेति । त्यदाद्यत्वमित्युपलक्षणमाकारस्यापि । तेनाऽमूदृक् सिद्धयति । अदसोद्रेरिति । एवञ्च तन्त्रेणार्थद्वयेऽपि सूत्रतात्पर्यं, लक्ष्यानुरोधाच्च व्यवस्था । आचार्यमतभेदाच्च रूपत्रयमपि

---

१ 'अः अस्य' । २ 'स्येति' पा० । ३ 'दपदस्या' पा० । ४ 'सकारस्य' पा० । ५ 'असेरिति' ।

अथ दाद्ग्रहणं किमर्थम् ? ॥ ॥ * ॥ दाद्ग्रहणमन्त्यप्रतिषेधार्थम् ॥ * ॥ दाद्ग्रहणं क्रियते ॥ [ किं प्रयोजनम् ? ॥ ] 'अन्त्यप्रतिषेधार्थम्' ॥ अलोऽन्त्यस्य मा भूत् । अमुया अमुयोरिति ॥ [ अदसोऽसेर्दादुदोमः ] ।

## एत ईद्बहुवचने ।८।२।८१।

॥ * ॥ ईत्वं बहुवचनान्तस्य ॥ * ॥ ईत्वं बहुवचनान्तस्येति वक्तव्यम् । 'बहुवचन' इतीयत्युच्यमाने इहैव स्यात्—अमीभिः अमीषु । इह न स्यात्—अमी अत्र, अमी आसते इति ॥ तत्तर्हि वक्तव्यं ? ॥ न वक्तव्यम् । नेदं पारिभाषिकस्य बहुवचनस्य ग्रहणं ॥ किं तर्हि ? ॥ अन्वर्थग्रहणमेतत् । बहूनामर्थानां वचनं बहुवचनं, बहुवचन इति ॥ [ एत ईद्बहु ] ।

## वाक्यस्य टेः प्लुत उदात्तः ।८।२।८२।

वाक्याधिकारः किमर्थः ? ॥ * ॥ वाक्याधिकारः पदनिवृत्त्यर्थः ॥ * ॥ वाक्याधिकारः क्रियते । [ किं प्रयोजनं ? ] ॥ 'पदनिवृत्त्यर्थः' । पदाधिकारो

---

प्र.] स्येति । 'अलोऽन्त्यस्ये'ति वचनादमुयेत्यत्र यकारस्योत्वं स्यात् ।

एत ईद्बहुवचने । ईत्वमिति । 'कृत्रिमाऽकृत्रिमयोः कृत्रिमे संप्रत्यय'इति वचनात्प्रत्ययस्य बहुवचनस्य ग्रहणेन भाव्यं, ततश्च 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषोपस्थानाद्बहुवचने परत एकारस्येत्त्वेन भाव्यममीभिरित्यादौ, नत्वमी इत्यत्रेति भावः। नेदमिति। उभयगतिरिह शास्त्रे भवतीति प्रतिपादितं, तत्र व्याप्तिन्यायाश्रयादिहाऽर्थग्रहणम् । [अदसोऽसेर्दादु दो मः]

वाक्यस्य टेः । वाक्यस्थस्यैव पदस्य प्रयोगो न केवलस्येति मत्वाह-वाक्याधिकार इति । पदनिवृत्त्यर्थं इति । पदस्येति यत्प्रस्तुतं तन्निवृत्त्यर्थः ।

---

उ.] साध्विति भावः । परंतु 'यद्येव'मित्यादिपूर्वपक्षोत्तरमदमुयङिति भवितव्यमिति भाष्योक्तेरेतदेव रूपं भाष्याभिप्रेतम् । अथवेति व्याख्यादूषणमेवेदं, श्लोकश्चोक्तपक्षद्वयप्राप्तरूपानुवादमात्रमेकदेशिनः । अतएवाग्रेऽसेरिति प्रतिषेधं शास्तीत्युक्तमित्याहुः ।

एत ईत् । प्रत्ययस्य बहुवचनस्य-तत्संज्ञकस्य । ग्रहणेन भाव्यं । 'बहुवचनग्रहणेने'ति शेषः । [ एत ईद्बहुवचने ] ॥

वाक्यस्य टेः । ननु वाक्यस्थस्यैव पदस्य यथा स्यान्न तु केवलस्येति पदविशेषणार्थं वाक्याधिकारः स्यादत आह-वाक्यस्थस्येति। ततश्चाऽव्यभिचारान्न पदविशेषणेनाऽर्थ इति भावः। 'प्रविश पिण्डी'मिति केवलस्यापि प्रयोगदर्शनादिदं चिन्त्यं। नन्वधिकारस्याधिकारान्तर-

---

१ 'अन्त्यस्य' पा० । २ इदं लुप्तम् । ३ इदं क्वाचित्कम् । ४ 'अन्त्यस्य' पा० । ५ इतिः क्वचिन्न । ६ इदं लुप्तम् ।

निवर्त्यंते ॥ न हि काको वाश्यत इत्यधिकारा निर्वर्त्तन्ते। दोषः खल्वपि स्याद्यदि वाक्याधिकारः पदाधिकारं निवर्तयेत्। इष्यन्त एवोत्तरत्र पदकार्याणि, तानि न सिध्यन्ति–'नश्छव्यप्रशा'निति ॥

पदनिवृत्त्यर्थमिति नैवं विज्ञायते,–पदस्य निवृत्त्यर्थं[2] पदनिवृत्त्यर्थमिति ॥ किं तर्हि ? ॥ पदे निवृत्त्यर्थं पदनिवृत्त्यर्थमिति। वाक्ये यावन्ति पदानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति, इष्यते च वाक्यपदयोरन्त्यस्य[3] स्यादिति, तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थो वाक्याधिकारः ॥

अथ टिग्रहणं किमर्थम् ? ॥*॥ टिग्रहणमलोन्त्यनियमे व्यञ्जनान्तार्थम् ॥*॥ टिग्रहणं क्रियते। [किं प्रयोजनम्[4] ? ॥ 'अलोऽन्त्यनियमे व्यञ्जनान्तार्थम्']। अलोन्त्यनियमे व्यञ्जनान्तस्यापि यथा स्यात्–अग्निचीश्त् सोमसू३त् ॥ अस्ति प्रयोजनमेतत् ? ॥ किं तर्हीति ॥

॥ * ॥ सर्वादेशप्रसङ्गस्तु ॥ * ॥ सर्वादेशस्तु टेः प्लुतः प्राप्नोति ॥ किं कारणम् ? ॥ 'अच' इति वचनादन्त्यस्य न, 'अन्त्यस्येति' वचनादचो न,

---

प्र.] नहि काक इति। नहि वाक्यग्रहणस्य पदाधिकारनिवृत्तिर्वाच्या यथा काकवाशितस्येत्यर्थः। विरोधाऽभावाच्चाऽशक्यः पदाधिकारो निवर्त्तयितुं, वाक्यस्थस्यैपदस्यैव कार्याभ्युपगमादित्याह–दोष इति। नश्छव्यीति। हन्तीत्यादावपदान्तस्य रुर्न भवति। नैवमिति। 'पदस्ये'त्यनुवर्तत एव। पदस्य टेः प्लुतो मा भूत्पदवाक्ययोर्यष्टिस्तस्यैव यथा स्यादित्येवमर्थं तु वाक्यग्रहणमित्यर्थः। टिग्रहणमिति। असति टिग्रहणे प्लुतश्रुत्याऽच्परिभाषोपस्थानादचा तदन्तविधौ सत्यजन्तस्यैव वाक्यस्याऽलोऽन्त्यस्येति वचनादन्त्यस्याचो नपुंसकह्रस्व इव प्लुतः स्यात्। टिग्रहणे तु तदुपादानसामर्थ्याट्टिनाऽज्विशेष्यते, नत्वचा टिरिति हलन्तस्यापि प्लुतः सिध्यति। सर्वादेशप्रसङ्गस्त्विति। 'अचश्चे'त्ययमलोन्त्यशेष इति भावः। अच इति वचनादिति। इह तस्याऽनुपस्थानादिति भावः। सर्वादेश इति।

---

उ.] निवर्त्तकत्वं दृष्टमित्यत आह–विरोधाभावाच्चेति। भाष्ये–पदे निवृत्त्यर्थमिति। पदे परतः पूर्वपदान्तस्य प्लुतनिवृत्त्यर्थमित्यर्थः। वाक्यान्तस्यैव पदान्तस्य यथा स्यादित्यर्थमिति भावस्तदाह–पदस्य टेरिति। भाष्ये–अलोन्त्यनियमे इति। अऽलोन्त्यनियमे सति व्यञ्जनान्तस्य न स्यात्तदर्थमित्यर्थस्तदाह–असतीति। सति तु पदावयवटेरवयवस्याऽच इत्यर्थ इति भावः। इह तस्येति। अच इत्यस्याऽलोन्त्यस्येत्यस्य चेत्यर्थः।

---

१ 'वर्त्यन्ते' पा०। २ इदं क्वचिन्न। ३ 'रन्त्यः स्या' पा०। ४ इदं त्रुटितं स्यात्।

उच्यते च प्लुतः ॥ स सर्वादेशः प्राप्नोति ॥*॥ उक्तं वा ॥*॥ [उक्तं वा[3]] ॥ किमुक्तम् ? ॥ 'ह्रस्वो दीर्घः प्लुत इति यत्र ब्रूयादच इत्येतत्तत्रोपस्थितं द्रष्टव्य'मिति ॥ [ वाक्यस्य टेः प्लुतः ]

## प्रत्यभिवादेऽशूद्रे। ८।२।८३।

अशूद्र इति किमर्थम् ? ॥ कुशल्यसि तुपजक ! ॥ अत्यल्पमिदमुच्यते 'अशूद्र' इति। ॥*॥ अशूद्रस्त्र्यसूयकेषु ॥*॥ अशूद्रस्त्र्यसूयकेष्विति वक्तव्यम्[3]। तत्र शूद्र उदाहृतम्। स्त्रियां-गार्ग्यहं भोः, आयुष्मती भव गार्गि ! । असूयके—स्थाल्यहं भोः ॥ आयुष्मानेधि स्थालि३न्[4] ॥ नैषा मम संज्ञा स्थालीति

प्र.]हलन्तस्य टेः सर्वस्य स्थाने इत्यर्थः। उक्तंवेति। द्वितीया षष्ठी 'अच' इति प्रादुर्भाव्यते, तत्र टिनाऽचो विशेषणादच एव स्थाने प्लुतो भवति । [वाक्यस्य टेः] ॥

प्रत्यभिवादे । गार्ग्यहं भो इति। केचिदाहुः—'न ह्यभिवादयते पादोपसङ्ग्रहणान्येव तु करोति'। अन्ये त्वाहुः—'अभिवादयते न तु स्वनाम गृह्णाति। अभिवादप्रत्यभिवादौ च नामगोत्राभ्यामिति स्त्रीप्रतिषेधो न विधेयः'। ये तु स्त्रिया नाम्नाऽभिवादप्रत्यभिवादाविच्छन्ति तन्मतेनाऽयं प्रतिषेधः। नैषा ममेति। असूयकः प्रत्याचष्टे—प्रत्यभिवादवाक्यान्तस्थस्य नाम्नो गोत्रस्य च प्लुत इष्यते नान्यस्येति यौगिकस्य प्लुतो न विधेयः। तत्र प्रत्यभिवादयित्रा स्थालीशब्दं संज्ञां मत्वा प्लुतो विहितः। यदा तूपहासार्थमसूयकस्तमाक्षिपति तदाऽसौ प्रत्यभिवादं नार्हत्याशीर्वचनं हि प्रत्यभिवादो गृह्यते। प्रतिसम्भाषणमात्रन्तु प्रत्यभिवादं मत्वा वार्तिककृताऽसूयके प्रतिषेध उक्तः। शूद्रेऽप्याशीर्वचनरूपप्रत्यभि-

उ.] परस्परविरोधेनोभयोरपि त्यागादिति भावः। भाष्ये—स सर्वादेशः प्राप्नोतीत्युत्तरं। तस्मादच इति वक्तव्यमिति शेषो बोध्यस्तदेवाह—उक्तं वेति। उक्तं चेति 'च' घटितपाठे तु सम्यगेव। त्वर्थे वा वाशब्दः। द्वितीयेति। पदोपस्थितिपक्ष एव तत्र स्थितो न तु तच्छेपपक्ष इति भावः। [ वाक्यस्य टेः प्लुत उदात्तः ]

प्रत्यभिवादे । अभिवादयितर्यनुग्रहद्योतकमाशीरूपं कुशलादिप्रश्नरूपं वा वाक्यमात्रं प्रत्यभिवादः। तदाह—भाष्ये-कुशल्यसि तुपजकेति। नह्यभिवादयते इति। अभिवादाऽभावे प्रत्यभिवादस्य सुतरामभाव इत्यर्थः। ये त्विति। इदमेव भाष्यसंमतं। भाष्ये 'एधी'ति भवेत्यर्थकम्। 'आयुष्मान्भव सौम्ये'ति स्मृतौ भवेत्यर्थपरं। नाम्न इति। इतरस्य संज्ञाभूतस्येत्यर्थः। प्रत्यभिवादं नार्हतीति। विपरीतं शापमेवार्हतीत्यर्थः। आशीर्वचनं हीति। इदं हि प्रत्यभिवादयितर्यनुग्रहद्योतककुशलप्रश्नादेरप्युपलक्षणं । प्रतिसंभाषणमात्र-

१ 'उक्तञ्च'। २ इदं क्वचिन्न। ३ 'वाच्यं'। ४ 'स्थालि३न्'। ५ 'स्थानिनः'।

[ति[1]] ॥ किं तर्हि ? ॥ दण्डिन्यायो मम विवक्षितः स वक्तव्यः-स्थाल्यहं भोः ॥ आयुष्मानेधि स्थालिन् ॥ न मम दण्डिन्यायो विवक्षितः ॥ किं तर्हि ? ॥ संज्ञा ममैषा ॥ असूयकस्त्वमसि जाल्म न त्वं प्रत्यभिवादमर्हसि भिद्यस्व वृषल ! स्थालिन् ! ॥*॥ भोराजन्यविशां वा ॥*॥ भो राजन्यविशां वेति वक्तव्यम् । देवदत्तोऽहं भोः, आयुष्मानेधि देवदत्त भोः ३ [आयुष्मानेधि[1]] देवदत्त भोः । भोः ॥ राजन्य-इन्द्रवर्माऽहं भोः । आयुष्मानेधीन्द्रवर्मा३न् । [आयुष्मानेधि[1]] इन्द्रवर्मन् ॥ राजन्य ॥ विट्-इन्द्रपालितोऽहं भोः । आयुष्मानेधीन्द्रपालिता ३ । [आयुष्मानेधि[1]] इन्द्रपालित ।

अपर आह—॥*॥ सर्वस्यैव नाम्नः प्रत्यभिवादे भोशब्द आदेशो वा[1] वक्तव्यः ॥*॥ देवदत्तोऽहं भोः । आयुष्मानेधि भोः ३ । आयुष्मानेधि देवदत्ता ३ इति वा ॥ इह कस्मान्न भवति-देवदत्त कुशल्यसीति ? ॥ इह किं चिदुच्यते किंचित्प्रत्युच्यते । प्रधानमुच्यते[2]ऽप्रधानं[3] प्रत्युच्यते ।

प्र.]वादाभावात्प्रतिषेधो न विधेय इति केचिदाहुः। स वक्तव्य इति। अभिवादयिता प्रत्यभिवादयित्रैवं वक्तव्य इत्यर्थः । भिद्यस्वेति । कर्मकर्तर्यात्मनेपदम् । भोराजन्यविशां वेति । भोःशब्दो-भवच्छब्दः, सम्बुद्ध्यन्तो निपातो वा । सर्वेति । नामगोत्रशब्दमन्तरेण प्रत्यभिवादो नास्तीति समाचारे भोःशब्दस्याऽसाधुत्वे प्राप्ते वचनम् । इह किं चिदिति । पदस्येति वर्तते तद्विशेषणं प्रत्यभिवाद इति, तेन प्रत्यभ्युद्यमानार्थवाचिनः पदस्य वाक्यान्तस्य टेः प्लुत्या भाव्यं नान्यस्येत्यर्थः । प्रधानस्थस्येति । संस्क्रियमाणस्य प्राधान्यं । कुशल्यसीति। साध्याया

उ.] मिति । अभिवादयितर्यनुग्रहद्योतकमन्यादृशं वेत्यर्थः । केचिदाहुरिति । अनुग्रहद्योतककुशलप्रश्नाद्यपि प्रत्यभिवाद इत्यत्राऽरुचिः । कर्मकर्तरीति । स्वयमेव भिन्नो भवेत्यर्थः ।

ननु संबुद्ध्यन्तेन निपातेन वा भोःशब्देन सिद्धे आदेशविधानं व्यर्थमत आह-नामगोत्रेति । एवञ्च सर्वत्रेयं प्राप्तविभाषेति तात्पर्यम् । आद्यमते तु भोःशब्दांशेऽप्राप्तविभाषा, इतरयोस्तु प्राप्तविभाषेति बोध्यम् । तेनेति । 'प्रत्यभिवादे' इति विषयसप्तमी । यत्पदं प्रत्यभिवादविषयं साक्षाद्वक्ति तस्य प्लुतः । तच्च नाम गोत्रं वा । अत्र तु नामपदं न वाक्यान्ते इति भावः। ननु क्रियाया एव सर्वतः प्राधान्यमत आह-संस्क्रियमाणस्येति । अभिवादयित्रनुग्रहार्थकत्वात्तस्य तेन तस्य संस्कार्यत्वमिति भावः । साध्याया अपीति । अतएव शब्दतः प्रधानाया अपीत्यर्थः । भाष्ये-प्रधानमुच्यते अप्रधानं प्रत्युच्यते इति। अयमर्थः-प्रधानं संस्कार्यं देवदत्तादिकं प्रथमत उच्यते । अप्रधानं संस्कारकं

१ इदं छ.चिह्न । २ 'अप्रधानं' । ३ 'प्रधानं' पा० ।

तत्र[1] प्रधानस्थस्य च[2] टिसंज्ञकस्य प्लुत्या भवितव्यं न चाऽत्र प्रधानस्थं टिसंज्ञम् ॥ इहापि तर्हि न प्राप्नोति–आधेयोऽग्नी३र्नाधेया[4] ३ इति ॥ नैतद्विचार्यते–आधेयोऽनाधेयोऽग्निश्चेद्भवतीति ॥ किं तर्हि ? ॥ इहा[5]ऽग्निसाधना क्रिया विचार्यते–आधेयोऽग्निर्नाधेय इति ॥ यद्येवं द्वितीयोऽ-ग्नि[6]शब्दस्य प्रयोगः प्राप्नोति ॥ 'उक्तार्थानामप्रयोग'इति न भविष्यति ॥

यद्येवमाधेयशब्दस्यापि तर्हि द्वितीयस्य प्रयोगो न प्राप्नोति–'उक्तार्थानामप्रयोगो भवती'ति ॥ नैष दोषः । उक्तार्थानामपि प्रयोगो दृश्यते । तद्यथा

प्र.] अपि क्रियायाः संस्कारिकात्वेन विवक्षितत्वादप्राधान्यम् । क्वचित्पाठः–'अप्रधानमुच्यते प्रधानं प्रत्युच्यते' इति । तस्याऽर्थः–अभिवादवाक्ये श्रुतो देवदत्तादिरेव प्रत्युच्यते, कुशल्यसीत्येतत्तु पूर्वमश्रुतत्वान्न प्रत्युच्यते, किं त्वपूर्वमेवैतदुच्यते । इहापीति । द्रव्यस्य विचार्यमाणत्वात्प्राधान्यं मन्यते । नैतदिति । न ह्याधानाऽनाधानकर्मविशेषविषयो विचारो, नाप्यग्निविशेषविषयः–किमाहवनीयोऽथ दक्षिणाग्निरिति, किं तर्ह्याधानं कर्तव्यं न कर्तव्यमिति तत्साधनक्रियाविचारः । यद्येवमिति । 'नाधेयोऽग्नि'रित्येवमग्निशब्दो निर्देश्यः । उक्तार्थानामिति । अग्निरेव प्रकृतत्वादपेक्ष्यत इत्यर्थः । उक्तार्थानामपीति । उक्ताऽर्था-

उ.] कुशल्यसीत्येत[त्तु][2] प्रत्युच्यते–पश्चादुच्यते । एवञ्च वाक्यान्ते प्रधानस्य टेरभावान्न भवतीति भावः । तद्बीजं तु कैयटेनोक्तमेव । अभिवादवाक्ये इति । अन्यत्र सिद्धस्यैव हि संस्कारार्थमनुवादो युज्यते इति भावः । अतएव संबोधनविभक्त्या निर्देशः । भाष्यस्थ–'प्रत्युच्यत' इत्यस्याऽनूद्यत इत्यर्थः । अपूर्वमिति । विधेयत्वादिति भावः । एवञ्चाऽनूद्यमानस्य वाक्यान्तस्थस्याभावान्न प्लुत इति तात्पर्यम् । अत्र पक्षे 'प्रधानस्थस्ये'त्यस्याऽनूद्यमानस्थस्येत्यर्थः । द्रव्यस्येति । अग्निरूपस्येत्यर्थः । एवञ्च तद्वाचिन एव वाक्यान्तस्य टेः प्लुतः स्यान्न तु 'नाधेय' इत्यस्यापीति भावः । विचार्यमाणत्वादिति । द्वयोर्लक्षणं विचारस्तद्विषयत्वादित्यर्थः । न हीति । 'आधेयोऽग्नि'रित्यत्र त्रितयमस्ति, अग्निशब्दवाच्यं द्रव्यं । धातुवाच्या क्रिया, प्रत्ययवाच्यं कर्म । तत्र क्रियाविषय एव विचारो नेतरविषयः । तत्राग्निः किमाधानक्रियाकर्म तत्साध्यत्वादुत्तानाधानक्रियाया इति न विचार्यते इत्यर्थः । कोऽग्निराधेय इत्यपि नेत्याह–नापीति । तत्साधनक्रिया–अग्निसाधनाधानक्रिया । आधेयोऽग्निरित्यत्र तु क्रियावाचिनोऽन्त्यपदत्वाऽभावात्तदुपलक्षितद्रव्यवाचिनो वाक्यान्तस्याऽग्निपदस्यापि प्लुत इति बोध्यम् । प्रधानस्थस्य प्रधानक्रियोपलक्षितस्थस्य च तेन प्लुतो विधीयते, अत्र चा'धेयोऽग्निर्नाऽऽधेया ३' इति भाष्यप्रयोग एव मानं । नन्वर्थप्रत्यायनाय शब्दप्रयो-

१ 'तस्य' पा० । २ इदं क्वचिन्न । ३ संज्ञस्य' पा० । ४ 'आधेयोऽग्निर्नाधेया ३' । ५ 'इहे'ति क्वचिन्न । ६ 'ह्यग्नि' पा० । ७ 'यद्येव'मिति क्वचिन्न । ८ 'नाम भवतीति' पा० ।

'अपूपौ द्वावानय' 'ब्राह्मणौ द्वावानये'ति ॥ [ प्रत्यभिवादेऽशूद्रे ]

## दूराद्धूते । च ८।२।८४ ।

दूराद्धूत इत्युच्यते दूरशब्दश्चाऽयमनवस्थितपदार्थकस्तदेव हि कंचित् प्रति[1] दूरं कंचित्प्रत्यन्तिकं भवति । एवं हि कश्चित्कंचिदाह–'एष पार्श्वतः करकस्त[2]मेनमानये'ति । स आह—'उत्थाय गृहाण, दूरं न शक्ष्यामी'ति । अपर आह–'दूरं मथुरा[3]याः पाटलिपुत्र'मिति । स आह–'न दूरमिदमन्तिक'-मिति । एवमेष दूरशब्दोऽनवस्थितपदार्थकस्तस्याऽनवस्थितपदार्थकत्वान्न ज्ञायते–'कस्यामवस्थायां प्लुत्या भवितव्य'मिति ? ॥ एवं तर्हि ह्वयतिनाऽयं निर्देशः क्रियते-'ह्वयतिप्रसङ्गे यद्दूरम्' ॥ किं पुनस्तत् ? ॥ यत्र प्राकृतात्प्रय-त्नात्प्रयत्न[4]विशेषेऽनुपादीयमाने सन्देहो भवति, 'श्रोष्यति न श्रोष्य[5]ती'ति, तद्दूरमिहाऽवगम्यते ॥ [ दूराद्धूते च ]॥

## हैहेप्रयोगे हैहयोः । ८।२।८५ ।

---

प्र.]भिमता उक्तार्थाः सादृश्यादुच्यन्ते,तत्त्वतस्तु यथा वृषवृषभशब्दौ भिन्नौ, तथा-ऽपूपावानय अपूपौ द्वावानयेत्येतौ, समुदायावेवार्थवन्तौ लोके प्रयुज्येते । प्रयोगा-नुसारेण लक्षणव्यवस्थाश्रीयते, तेनोक्तार्थानां प्रयोगेऽव्यवस्था नोद्भावनीया ।

दूराद्धूते च । तदेवेति । दूरस्याऽनवस्थितत्वात्प्लुतस्य विषयविभागो न व्यवतिष्ठत इत्यर्थः । ह्वयतीति । ह्वानक्रियापेक्षं दूरत्वमाश्रीयते न तु श्रोत्रादि-पुरुषापेक्षमित्यर्थः । [ दूराद्धूते च ] ।

हैहेप्रयोगे हैहयोः । पूर्वेण हूयमानार्थस्य पदस्य वाक्यान्तस्य टेः प्लुतवि-

---

उ.] गाच्छब्दान्तरेणोक्ते किमर्थं तत्प्रयोगोऽत आह-तत्त्वतस्त्विति । यथा वृषवृषभयोरखण्ड-पदवादेऽत्यन्तभेदेऽपि अवयवे ध्वनिसाम्याद्वृषशब्दत्वभ्रमस्तथानयोरत्यन्तभेदेऽपि सादृश्या-दवयवे तत्त्वभ्रम इति न पौनरुक्त्यमिति भावः । नन्वेवं 'वृषो वृषभ' इत्यपि प्रयोगः स्यादित्याशङ्क्य 'स्थितस्य गति'रिति न्यायेन प्रयोगानुसाराद्व्यवस्थेत्याह–प्रयोगेति ।

दूराद्धूते च । ह्वानेति । दूरस्थपुरुषश्रवणाय यदाह्वानमित्यर्थः । दूरादिति । 'दूरान्तिकार्थेभ्य' इति पञ्चमी । भाष्ये यत्र प्राकृतात्प्रयत्नाद्विशेषे अनुपादीयमाने इति पाठः । विशेषे–अधिके यत्ने । [ दूराद्धूते च ] ।

हैहेप्र । ननु दूराद्धूते हैहयोर्दूराद्धूतेचेति सूत्रान्तरेण सिद्धत्वादिदमनर्थकमित्यत

---

१ 'किंचि' पा० । २ एनमिति क्वचिन्न । ३ 'मथुरा'पा० । ४ 'विशेष उपा' पा० । ५ इतिः क्वचिन्न ।

हैहेग्रहणं किमर्थम् ? ॥*॥ हैहेप्रयोगे हैहेग्रहणं हैहयोः प्लुत्यर्थम् ॥ * ॥ हैहेप्रयोगे हैहेग्रहणं क्रियते ॥ किमर्थम् ? ॥ ['हैहयोः प्लुत्यर्थम्'[1]] । हैहयोः प्लुतिर्यथा स्यात् । देवदत्त है३ देवदत्त[2] हे३ । अक्रियमाणे हि हैहेग्रहणे तयोः प्रयोगेऽन्यस्य स्यात् ॥ अथ प्रयोगग्रहणं किमर्थम् ? ॥*॥ प्रयोगग्रहणमर्थवद्ग्रहणेऽनर्थकार्थम् ॥*॥ प्रयोगग्रहणं क्रियते । [किं प्रयोजनम्[1] ? ॥ 'अर्थवद्ग्रहणेऽनर्थकार्थम्' ।] अर्थवद्ग्रहणेऽनर्थकयोरपि यथा स्यात् । देवदत्त है३ । देवदत्त हे३ ॥ अथ पुनर्हैहेग्रहणं किमर्थम् ? ॥*॥ पुनर्हैहेग्रहणमनन्त्यार्थम् ॥ * ॥ [पुनर्हैहेग्रहणं[1] क्रियते ॥ किं प्रयोजनम् ? ॥ 'अनन्त्यार्थम्'] । अनन्त्ययोरपि यथा स्यात् । है३ देवदत्त' हे३ देवदत्तेति ॥ [ हैहेप्रयोगे ]

## गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ।८।२।८६ ।

॥*॥ गुरोः प्लुतविधाने लघोरन्त्यस्य प्लुतप्रसङ्गोऽन्येन विहितत्वात् ॥*॥ गुरोः प्लुतविधाने लघोरन्त्यस्य प्लुतः प्राप्नोति । दे३वदत्त[3] ॥ किं कारणम् ? ॥ 'अन्येन विहितत्वात्' । अन्येन हि लक्षणेन लघोरन्त्यस्य प्लुतो विधीयते

प्र.]धानाद्धैहयोर्न प्राप्नोतीति वचनम्। हैहयोः प्लुत्यर्थमिति । अन्यथाऽऽरम्भसामर्थ्यादनन्त्यस्यापि हूयमानवाचिन एव प्लुतः स्यात्—देवदत्त है ३ इत्यादौ । अनर्थकयोरपीति । यदा तु प्राक् सम्बोधनपदं प्रयुज्यते तदा हैहयोर्द्योत्यार्थाऽभावादानर्थक्यं, यदा तु तयोः प्राक् प्रयोगस्तदाऽऽमन्त्रणाभिव्यक्त्यर्थत्वादर्थवत्त्वम् । अनन्त्ययोरपीति । अन्यथा वाक्यस्य टेरित्यधिकारादनन्त्ययोर्न स्यात्।

गुरोः । गुरोः प्लुतविधान इति । 'अनन्त्यस्यापी'त्यपिशब्देन गुरोः सन्निधानात्स एवाऽन्त्यः समुच्चीयते, तेन यत्र गुरुरन्त्यस्तत्रैव पर्यायः स्याल्लघौ त्वन्त्ये पूर्वेण तस्य स्यादनेन चाऽनन्त्यस्य गुरोरित्यर्थः । न वेति । अपिशब्देन

उ.]आह-पूर्वेणेति । नामगोत्रयोरेव हूयमानार्थवृत्तित्वं, हैहयोस्तु न तदर्थस्यमाभिमुख्यद्योतकत्वादित्यर्थः । भाष्ये-हैहयोरिति । अताद्दृशयोरित्यर्थः । अन्यथेति । 'हैहेप्रयोगे' इतीयत्युच्यमाने इत्यर्थः । हे देवदत्तेत्यादौ पूर्वेणैव सिद्धेरिति भावः । आनर्थक्यं व्युत्पादयति-यदेति । द्योत्यार्थाभावादिति । संबोधनेनैवाऽऽभिमुख्यस्य द्योतितत्वादिति भावः । प्रयोगग्रहणे तु यथा कथञ्चित्तयोः प्रयोग एव सिद्धे पष्ठ्युच्चारणसामर्थ्याद्धैहयोः प्लुतसिद्धिरित्यर्थः । [ हैहेप्रयोगे हैहयोः ] ।

गुरोरनृतो । लघौ त्वन्त्ये इति । तत्र प्लुतयोर्यौगपद्यप्रसङ्ग इत्यर्थः । प्रकृतदृष्टि-

१ इदं त्रुटितं भवेत् । २ इदं क्वाचित्कम् । ३ 'देवदत्त३' पा० ।

'दूराद्धूते चे'ति ॥*॥ न वाऽनन्त्यस्यापीति वचनमुभयनिर्देशार्थं तस्मान्न वैष दोषः ॥ किं कारणम् ? ॥ ['अनन्त्यस्यापीति वचनमुभयनिर्देशार्थम्'] । अनन्त्यस्यापीति वचनमुभयनिर्देशार्थं क्रियते 'अनन्त्यस्यापि गुरोरन्त्यस्यापि टे'रिति ॥ [illegible] अनन्त्यस्यापि गुरेरन्त्यस्यापि गुरोरिति ? ॥ नेत्याह । कथं तर्हि । अनन्त्यस्यापि गुरोरन्त्यस्यापि टेरिति ॥ अथ प्राग्वचनं किमर्थम् ? ॥ * ॥ प्राग्वचनं विभाषार्थम् ॥*॥ प्राग्वचनं क्रियते ॥ [ किं प्रयोजनम् ? ॥ 'विभाषार्थम्' ]॥ विभाषा यथा स्यात् ॥ * ॥ प्राग्वचनानर्थक्यं चैकस्येति वचनात् ॥ * ॥ [प्राग्वचनमनर्थकम्[1] ॥ किं कारणम् ?॥ 'एकैकस्येति वचनात्'] एकैकग्रहणं क्रियते तद्विभाषार्थं भविष्यति ॥ अस्त्यन्यदेकैकग्रहणस्य प्रयोजनम् ॥ किम् ?॥ युगपत्प्लुतो मा भूदिति ॥ 'अनुदात्तं पदमेकवर्ज'मिति वचनान्नाऽस्ति यौगपद्येन संभवः ॥ असिद्धः प्लुतस्तस्याऽसिद्धत्वान्नियमो न प्राप्नोति ॥ नैष दोषः । यद्यपीदं तत्राऽसिद्धं तत्त्विह सिद्धम् ॥ कथम् ? ॥ 'कार्यकालं संज्ञापरिभाष'मिति। यत्र कार्यं तत्रोपस्थितं द्रष्टव्यं। 'गुरोरनृतोनन्त्यस्याप्येकैकस्य प्राचाम्' । उप[1]स्थितमिदं भवत्यनुदात्तं पदमेकवर्जमिति ॥ इहापि तर्हि सम[1]ावेशो न प्राप्नोति—देवदत्ता ३ ॥ सिद्धाऽसिद्धावेतौ । यौ हि

प्र.] प्रकृतष्टिः समुच्चीयते न तु गुरुरेवाऽन्त्य इत्यर्थः। विभाषार्थमिति। तेन पक्षे न कस्यचित्प्लुतो भवति । इतरस्तु पक्षेऽनन्त्यस्य प्लुतः पक्षे त्वन्त्यस्य टेरित्येवमर्थं प्राग्ग्रहणमनेनोक्तमिति मत्वाह—प्रागिति । यद्यपीदमिति । यथोद्देशपक्षे । इहापीति । आमन्त्रितस्यादिरुदात्त इत्युदात्तः प्लुतोदात्तत्वेन न समाविशेत्, वर्ज्यमानस्वरप्रसङ्गात्। यदा चाऽऽम एकान्तरमित्यनेन निघातैकश्रुतिनिषेधस्तदेदमुदाहरणम् । सिद्धासिद्धाविति । आमन्त्रितस्यादिरुदात्तः सिद्धः,

उ.] रिति। तेन सर्वत्र पर्यायसिद्धिरिति भावः। भाष्ये—उभयनिर्देशार्थमिति। गुर्वगुर्वोरित्यर्थः। इत्येवमर्थमिति । अन्यथोदात्तानुदात्तयोः प्लुतयोः समावेशः स्यादिति वक्ष्यते । भाष्ये—तस्यासिद्धत्वादिति । कार्यकालपक्षेऽपि स्वरितस्वप्रतिज्ञानात्तस्याविपाद्यामप्रवृत्तिः । ध्वनितं चेदं षष्ठे, स्वरितो वानुदात्ते इति सूत्रे च भाष्ये। एकदेश्याह—नैष दोष इति । 'यद्यपी'त्यादि भाष्यं 'पूर्वत्रे'त्यत्र व्याख्यातम् । ननु देवदत्त इत्यादावेकश्रुति दूरात्संबुद्धावित्यस्य प्रसङ्गात्कथं पाष्ठिकमाद्युदात्तत्वं स्यादत आह—यदा चेति ।

१ इदं क्वचिन्न । २ 'लब्धपेक्ष' पा० । ३ 'अस्तो'ति क्वचिन्न । ४ 'यौगपद्ये सं पा० ।

सिद्धावेव असिद्धावेव वा तयोर्नियमः ॥ यस्तर्हि स्वरितः प्लुतस्तेन[1] समावेशः प्राप्नोति—'स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सने'ष्विति ॥ स्वरितेऽप्युदात्तोऽस्ति ॥ यस्तर्ह्यनुदात्तः[2] प्लुतस्तेन समावेशः प्राप्नोति 'अनुदात्तं प्रश्नान्ताभिपूजितयो'रिति । तस्मात्प्राग्वचनं कर्तव्यम् ॥ [ गुरोरनृतो ]

## ये यज्ञकर्मणि ।८।२।८८।

॥ * ॥ ये यज्ञकर्मणीत्यतिप्रसङ्गः ॥ * ॥ ये यज्ञकर्मणीत्यतिप्रसङ्गो भवति । इहापि प्राप्नोति—ये देवासो दिव्येकादशस्थेति ॥ * ॥ सिद्धं तु ये यजामह इति ब्रूह्यादिषूपसङ्ख्यानात् ॥*॥ सिद्धमेतत् ॥ कथम् ?॥ ['ये यजा[3]मह इति ब्रूह्यादिषूपसङ्ख्यानात्' ]। ये यजामहेशब्दो[4] ब्रूह्यादिषूपसङ्ख्येयः ॥

प्र.] तस्मिंस्त्वपेक्षिते प्लुतोदात्तोऽसिद्ध इति तदाश्रयो निघातो न भवति । स्वरितेऽपीति । 'अनुदात्तं पदमेकवर्ज'मित्यत्राऽविद्यमानोदात्तमनुदात्तमाश्रीयते । न च पारिभाषिक उदात्तो गृह्यते किं तर्ह्युभयगतिरिह शास्त्र इति धर्मो गृह्यते, स च स्वरितेऽस्तीत्युदात्तस्वरितयोर्यौगपद्याऽभावः । यस्तर्हीति । उदात्तानुदात्तप्लुतयोः समावेशनिवृत्त्यर्थमेकैकग्रहणं, प्राग्ग्रहणं तु पक्षे सर्वेषां प्लुताऽभावार्थम् ॥

उ.] आम् पचसि देवदत्तेत्यादौ । अन्ये तु दूरात्संबुद्ध्यभावे इदम्, 'आम एकान्तर'-मित्येतद्विषये प्लुताऽप्रवृत्तेरतत्सूत्रे भाष्ये स्पष्टमुक्तेः । दूराद्धूते इत्यनुवर्तमानमप्यत्र बोधनमात्रोपलक्षणम् । अतएव 'प्रत्यभिवादे' इत्येतद्विषयेप्यस्य प्रवृत्तिः । स्पष्टं चेदं वृत्तौ । पादादिस्थस्योदाहरणत्वाच्चात्र न निघात इत्याहुः । तस्मिंस्त्वपेक्षिते इति । प्लुतस्याऽसिद्धत्वे तदेकवाक्यतापन्नस्यानुदात्तं पदमित्यस्याप्यसिद्धत्वान्न निघात इति भावः । भाष्ये—यस्तर्हि स्वरितः प्लुत इति । विहितस्वरितगुणक इत्यर्थः । 'स्वरितमाम्रेडित'मित्यादिभिर्लाघवात्स्वरितगुण-मात्रस्यैव विधानात् । एवमनुदात्तं प्रश्नान्तेत्यत्रापि वोध्यमिति केचित् । 'एकं वर्जयित्वा शिष्टमनुदात्तगुणयोगी'ति सूत्रार्थात्स्वरितेऽप्यनुदात्तगुणयोगसत्त्वात्समावेशः स्यादिति भावः । 'अनुदात्त'पदं यौगिकमिति परिहाराशयमाह—अनुदात्तं पदमिति । एवं च स्वरितेऽप्युदात्तगुणसद्भावान्न समावेश इति भावः । 'अनुदात्तशब्देनापि पारिभाषिकस्य स्वतन्त्रस्याऽच एव ग्रहणं न स्वरितैकदेशस्ये'ति शङ्कां समाधत्ते—न चेति ।

यस्तर्ह्यनुदात्त इति । एतदन्तमेकदेश्युक्तिः । आचार्यस्य तु सर्वेषामुक्तानां समावेशवारणायैकैकस्येतीत्याशयः । उक्तरीत्या त्रिपाद्यां शेषनिघाताऽप्रवृत्तेः । किञ्च देवदत्तेत्यादौ प्लुताऽसिद्धत्वात्पूर्वं पाष्ठ्याद्युदात्तत्वे ततः प्लुते तदेकवाक्यतापन्नशेषनिघातो दुर्वारः । तत्प्रवृत्त्युत्तरमस्याऽसिद्धत्वेऽपि क्षत्यभावात् । भाष्यकृता तु षष्ठे एव त्रिपाद्याम्

१ 'स्वरितप्लुतः' पा० । २ 'दात्तप्लुतः' पा० । ३ इदं लुप्तंस्यात् । ४ 'महशब्दो' पा० ।

## प्रणवष्टेः ।८।२।८८।

'प्रणव' इत्युच्यते कः प्रणवो नाम?॥ पादस्य वाऽर्द्धर्चस्य वाऽन्त्यमक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोङ्कारं त्रिमात्रमोकारं[1] वा विदधति तं 'प्रणव'[2] इत्याचक्षते ॥ अथ टिग्रहणं किमर्थम् ?॥ ॥*॥ टिग्रहणं सर्वादेशार्थम् ॥*॥ [टिग्रहणं क्रियते ॥ किं प्रयोजनं ?॥ 'सर्वादेशार्थम्' ]। यदा ओकारस्तदा सर्वादेशो यथा स्यात्। यदा [हि[3]] ॐकारस्तदाऽनेकाल्शित्सर्वस्येति सर्वादेशो भविष्यति ॥ [प्रणवष्टेः]

प्र.] प्रणवष्टेः। कः प्रणव इति। शास्त्रेऽस्मिन्नपरिभाषितत्वात्प्रश्नः। पादस्येति। शास्त्रान्तरे प्रसिद्ध आश्रीयते देवतावत्। अक्षरम्—अच्। अन्त्यमचं गृहीत्वेत्यर्थः। तदाद्यक्षरशेषस्येति। अक्षरं च शेषश्च—हल्, अक्षरशेषं। तदन्त्यमक्षरमादिर्यस्य तत्तदादि। तदादि च तदक्षरशेषं च तदाद्यक्षरशेषं—टिसंज्ञकमित्यर्थः।

अथेति। टिस्थानिकयोरेवोङ्कारौकारयोः शास्त्रान्तरे प्रणवसंज्ञाविधानात्प्रश्नः। ॐकार इति। असति टिग्रहणेऽलोन्त्यस्येति वचनाट्टेर्योऽन्त्यो हल्तस्यौकारः स्यात्। प्लुतत्वेन प्रणवस्य व्यभिचाराऽभावादविशेषणात्। संज्ञया च विधानेऽच्परिभाषोपस्थानात्। अथाऽप्यच्परिभाषोपस्थानाट्टिनाऽज्विशेष्यते तथापि टेर्योऽच्[4] तस्य स्यान्न तु सर्वस्य टेः। ॐकारस्त्वज्झल्समुदायत्वात्प्लुतो न भवतीति

उ.] अस्या अप्रवृत्तेः सिद्धान्तितत्वेनाऽन्नत्यस्य स्पष्टमेकदेश्युक्तित्वप्रत्ययेन च न पराक्रान्तमत्रेति बोध्यम्। [गुरोरनृतोऽनन्त्यस्यापि]॥

ये यज्ञकर्मणि। सिद्धन्त्विति। एवमेव सूत्रं तु कर्त्तव्यमिति भावः॥

प्रणवष्टेः। यज्ञकर्मणि ऋगादीनां टेः प्लुतः प्रणवोऽनेनादेशो विधीयते। यद्यप्यक्षरशब्देन वर्णमात्रं, तथा पीहाऽज्विवक्षित इत्याह—अक्षरमजिति। तदाद्यक्षरशेषशब्दे बहुव्रीहिद्वन्द्वगर्भः कर्मधारय इत्याह—अक्षरञ्च शेषश्चेति। अजपेक्षशेषशब्देन हलुच्यते। एतद्विसर्गादेरप्युपलक्षणं। तत्राऽक्षरस्य तदादित्वं व्यपदेशिवद्भावेन, शेषस्य तु मुख्यं। पादस्यार्धर्चस्य वेति। वाशब्दश्चार्थे। तेन ऋचोऽपि सङ्ग्रहः। ननु 'टे'रित्यनुवर्तमाने पुनष्टिग्रहणं किमर्थमत आह—असतीति। ननु प्लुतश्रुत्याऽच्परिभाषोपस्थित्याऽन्त्यस्याऽच एवोङ्कारः स्यान्न तु हलोऽत आह—प्लुतत्वेनेति। प्रणवस्य—ओङ्काररूपस्य। अथापीत्यभ्युपगमवादः। उपरञ्जकतया प्लुतेन विशेषणसम्भवेनाऽच्परिभाषोपस्थितिरिति भावः।

[1] 'त्रिमात्रमोङ्कारमोकारं वा'। 'त्रिमात्रम् ॐकारं, त्रिमात्रमोङ्कारं'। [2] 'प्रणवमिति'। [3] इदं क्वचिन्न। [4] 'टेर्योऽच्'। [5] 'ग्रहः'।

## याज्याऽन्तः ।८।२।९०।

अन्तग्रहणं किमर्थम् ? ॥ याज्या नामर्चो वाक्यसमुदायस्तत्र यावन्ति वाक्यानि सर्वेषां टेः प्लुतः प्राप्नोति, इष्यते चाऽन्त्यस्य स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थमन्तग्रहणम् ॥ [ याज्याऽन्तः ] ।

## अग्नीत्प्रेषणे परस्य च ।८।२।९२।

॥ * ॥ अग्नीत्प्रेषण इत्यतिप्रसङ्गः ॥ * ॥ अग्नीत्प्रेषणे इत्यतिप्रसङ्गो भवति । इहापि प्राप्नोति—अग्नीदग्नीन्विहर । ॥*॥ सिद्धं त्वोश्रावये परस्य[1] चेति वचनात् ॥ * ॥ सिद्धमेतत् ॥ कथम् ? [ 'ओश्रावये परस्य चेति वचनात्' ]। ओश्रावये परस्येति वक्तव्यम् । ओ३श्रा३वय ॥ अपर आह—ओश्रावयाश्रावययोरिति वक्तव्यम् । ओ३श्रा३वय । आ३श्रा३वय । ॥*॥ वहुलमन्यत्र[2] ॥*॥ वहुलमन्यत्रेति[3] वक्तव्यम् । उद्ध[4]रा ३ उद्धर । आह[4]रा ३ आहर ॥ तत्तर्हि

---

प्र.] सर्वस्य टेर्वाक्यस्य टेरित्यधिकारात्सिध्यति । केचित्तु टिस्थानिकस्यैवौकारस्य प्रणवसंज्ञाविधानाट्टिग्रहणमनर्थकमिति प्रतिपन्नाः । [ प्रणवष्टेः ] ।

याज्यान्तः । अन्तग्रहणमिति । 'वाक्यस्य टे'रित्यधिकारादन्त्यस्यैव भविष्यतीति प्रश्नः । याज्या नामेति । ऋक्समुदायो याज्याः, तत्र प्रत्यृचं प्लुतः प्राप्नोतीति, ऋक्समुदायस्य योऽन्तस्तस्य प्लुतार्थमन्तग्रहणं । तेनाऽयमर्थो— 'याज्यानामन्तो यष्टिस्तस्य योऽच्तस्य प्लुतः' । [ याज्यान्तः ] ।

अग्नीत् । वहुलमिति। तेनौश्रावयाश्रावयाभ्यामन्यत्राग्नीत्प्रेषणे वहुलं प्लुतो भवति, वहुलवचनाच्च नादेर्न परस्य, अपि त्वन्त्यस्यैव प्लुतः । उद्धरा ३ उद्धरेति ।

---

उ.] यदा हीत्यादि भाष्यं व्याचष्टे—ॐकारस्त्विति । प्रतिपन्ना इति । तदा हि सूत्रमेव व्यर्थमित्यरुचिः । [ प्रणवष्टेः ] ॥

याज्यान्तः । वाक्यस्य टेरिति । 'टे'रित्यनेन त्वव्यभिचारादन्तस्य टेरिति विशेषणमनर्थकं । टिग्रहणनिवृत्तौ त्वजन्ताया एव याज्यायाः स्यादिति तात्पर्यम् । ऋक्समुदाय इति । याज्यानां वाक्यस्य टेरित्यर्थो ह्यन्तग्रहणाऽभावे स्यादिति भावः । ऋचो वाक्यसमुदाय इति भाष्ये । ऋक्समुदायरूपो वाक्यसमुदाय इत्यर्थः । [ याज्यान्तः ] ॥

अग्नीत्प्रे । अग्नीध ऋत्विग्विशेषस्य प्रेषण इति कर्मषष्ठ्या समासः । 'अग्नीत्कर्मकेऽध्वर्युकर्तृके प्रेषणे आदेः प्लुतो भवति, ततः परस्य द्वितीयाऽचश्च' इति सूत्रार्थः । भाष्ये—ओश्रावयेपरस्येति । परस्य चाऽऽदेश्चेत्यर्थः । अपि त्वन्त्यस्यैवेति । उद्धर उद्धरेत्यादौ

---

१ 'श्रावयेति' 'परस्येति'पा० । २ इदं क्वाचित्कम् । ३ 'मन्यत्रापि' 'त्रापीति' पा० । ४ 'रा' ।

